# MudgalapurAna Khanda 9 Yogacharitam

# मुद्गलपुराणं खण्डः ९ योगचरितम्

## Document Information

Text title : Mudgala Purana Khanda 9 Yogacharitam

File name : mudgalapurANam9.itx

Category : purana, ganesha

Location : doc_purana

Proofread by : Yash Khasbage

Latest update : September 18-19, 2023 Ganeshachaturthi

Send corrections to : sanskrit at cheerful dot c om



Please note that proofreading is done using Devanagari version and other language/scripts are generated using **sanscript**.

September 18, 2023

*sanskritdocuments.org*

# मुद्गलपुराणं खण्डः ९ योगचरितम्

॥ मुद्गलपुराणं खण्डः ९॥

॥ अथ श्रीमुद्गलपुराणे नवमः खण्डः प्रारभ्यते ॥

(Page खं. ९ अ. १ पान १)

## ९.१ स्वसंवेद्यस्वरूपवर्णनं नाम प्रथमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

श्रीगणेशशारदागुरुभ्यो नमः ।
शौनक उवाच ।
धूम्रवर्णावतारस्य श्रुत्वा चरितमुत्तमम् ।
नानाख्यानसमायुक्तं न तृप्तोऽहं महामते ॥ १॥

अधुना वद दक्षस्य संवादं मुद्गलस्य च ।
पुनः किं पृष्टवान् दक्षो मुद्गलाय महर्षये ॥ २॥

सूत उवाच ।
श्रुत्वा माहात्म्यमुख्यं स धूम्रवर्णात्मकं परम् ।
हृष्टरोमा प्रजानाथः पुनः पप्रच्छ तं मुनिम् ॥ ३॥

दक्ष उवाच ।
धन्योऽहं सर्वभावैश्च त्वत्तः श्रुत्वा महाद्भुतम् ।
चरितं धूम्रवर्णस्य सर्वसिद्धिप्रदायकम् ॥ ४॥

अधुना वद विप्रेश योगं पूर्णपदप्रदम् ।
अष्टौ विनायकाः प्रोक्तास्तेषां योगे स्वरूपकम् ॥ ५॥

स्वानन्दः कीदृशो योगोऽयोगस्तथैव कीदृशः ।
सुशान्तिदः पूर्णयोगस्तेषां रूपं सुविस्तरात् ॥ ६॥

सूत उवाच ।
एवं पृष्टो महायोगी दक्षेण हर्षसंयुतः ।
तं जगाद शृणुष्व त्वं द्विजैः शौनक सौख्यदम् ॥ ७॥

मुद्गल उवाच ।
स्वानन्दात् स्वेच्छया दक्ष ब्रह्माणि निःसृतानि तु ।
असत् सत् समनेतीति चत्वारि मायया प्रभोः ॥ ८॥

एकैकाश्रितभावेन सृष्टं तैः सौख्यरूपकम् ।
ततो बोधस्ततः सोऽहं ततो बिन्दुर्महामते ॥ ९॥

ततश्चतुर्विधं विश्वं स्थूलं सूक्ष्मं समात्मकम् ।
नाद एतानि ब्रह्माणि मीलितानि परस्परम् ॥ १०॥

निजसत्ताविहीनानि जातानि दैवयोगतः ।
स्वस्वव्यापारजं भोगं लेभिरे न कदाचन ॥ ११॥

ततस्तैश्च तपस्तप्तं घोरं चित्तैकभावतः ।
यस्मै कस्मै नमश्चोक्त्वा मूलभूताय सर्वपैः ॥ १२॥

दिव्यवर्षसहस्रेण प्रसन्नो गणपोऽभवत् ।
हृदिस्थं दर्शयामास मन्त्रमेकाक्षरं स्वकम् ॥ १३॥

तं दृष्ट्वा हर्षयुक्तानि जेपुर्मंत्रं ततः परम् ।
गते वर्षशते पूर्णे दर्शयामास स्वं वपुः ॥ १४॥

नरकुञ्जररूपं तु दृष्ट्वा विस्मितमानसैः ।
सद्यस्तत्कृपया ज्ञानं प्राप्तं तद्रूपबोधकम् ॥ १५॥

ज्ञात्वा स्वानन्दनाथं तं ब्रह्माणि हर्षतः परम् ।
तमेव हृदये ध्यात्वा जेपुर्मन्त्रं सुसिद्धये ॥ १६॥

वर्षेणैकेन विघ्नेशः सुप्रसन्नो बभूव ह ।
आययौ वरदानार्थं पुरस्तेषां प्रतापवान् ॥ १७॥

तं दृष्ट्वा तानि ब्रह्माणि तुष्टुवुः पूज्य विघ्नपम् ।
बद्ध्वा करपुटं दक्ष स्वस्वसामर्थ्यसिद्धये ॥ १८॥

ब्रह्माण्यूचुः ।
नमस्ते परेशाय विघ्नाधिपाय परेषां सदा सौख्यदात्रे हिताय ।

स्वसंवेद्यरूपाय चानन्ददाय निजानन्दयोगाय ढुण्ढे नमस्ते ॥ १९॥

अनाथाय नाथाय सर्वात्मनां ते सदा मोहहीनाय नेतिधराय ।
शिवायाथ त्रैविध्यभावप्रदात्रे निजानन्दयोगाय ढुण्ढे नमस्ते ॥ २०॥

समायाथ मायास्वरूपाय द्वन्द्वप्रकाशाय सर्वात्मकायैव विष्णो ।
महानन्दरूपाय सर्वातिगाय निजानन्दयोगाय ढुण्ढे नमस्ते ॥ २१॥

सदा सत्यरूपाय सर्वात्मने ते विकारैर्विहीनाय सूर्याय भूम्ने ।
अनन्ताय भेदादिभिर्वर्जिताय निजानन्दयोगाय ढुण्ढे नमस्ते ॥ २२॥

अपारस्वरूपाय नानामयाय विहारेषु सक्ताय पूर्णात्मकाय ।
महाशक्तये शक्तिरूपाय मोहिन् निजानन्दयोगाय ढुण्ढे नमस्ते ॥ २३॥

(Page खं. ९ अ. १ पान २)
निरोधस्वरूपां समास्थाय बुद्धिं निजानन्दभ्रान्तिप्रदां सिद्धिरूपाम् ।
प्रविश्यैव तुर्येषु बिम्बात्मकाय निजानन्दयोगाय ढुण्ढे नमस्ते ॥ २४॥

ततः साङ्ख्यरूपं विनिर्माय तुर्यैस्तदाकाररूपाय वै बोधकाय ।
सदा स्वात्मनिष्ठाय सङ्कल्पहन्त्रे निजानन्दयोगाय ढुण्ढे नमस्ते ॥ २५॥

ततो बोधरूपं विनिर्माय बोधस्वरूपाय मायामयाकारधाम्ने ।
सदा खेलकायाथ नानाप्रचारिन्निजानन्दयोगाय ढुण्ढे नमस्ते ॥ २६॥

ततो देहिरूपाय निर्माय तं वै सदैकप्रबोधाय भ्रान्तेर्धराय ।
स्वतो भ्रान्तिहीनाय सोऽहम्प्रदाय निजानन्दयोगाय ढुण्ढे नमस्ते ॥ २७॥

ततो बिन्दुमात्राय निर्माय बिन्दुं चतुर्धा चतुष्पादरूपेण खेलिन् ।
अनन्तस्वरूपाय देहप्रचार निजानन्दयोगाय ढुण्ढे नमस्ते ॥ २८॥

ततो नादरूपं विनिर्माय नादस्वरूपाय तत्स्थाय चैतन्यदाय ।
अजायाथ त्रैविध्यदेहस्थिताय निजानन्दयोगाय ढुण्ढे नमस्ते ॥ २९॥

समास्थाय बाह्यान्तरे संस्थिताय विनिर्माय सौषुप्तरूपं परात्मन् ।
तदाकाररूपेण चानन्ददाय निजानन्दयोगाय ढुण्ढे नमस्ते ॥ ३०॥

सदा स्वप्नरूपाय सर्वान्तरस्थाय सूक्ष्माय सत्त्वात्मने खेलकाय ।
विनिर्माय सूक्ष्मं त्रिधा संस्थिताय निजानन्दयोगाय ढुण्ढे नमस्ते ॥ ३१॥

नमस्ते प्रभो स्थूलरूपाय तत्र विनिर्माय जागृत्तदाकाररूप ।
सदा ह्यन्नभूताय बाह्यात्मकाय निजानन्दयोगाय ढुण्ढे नमस्ते ॥ ३२॥

गणांस्ते गणेशात्मरूपेण सृष्टांस्तवांशांश्च तान् रक्ष ब्रह्मेश दासान् ।
सदा पादपद्मे रतांस्ते कुरुष्व निजानन्दयोगाय ढुण्ढे नमस्ते ॥ ३३॥

गजाकारतुण्डाय लम्बोदराय चतुर्बाहवे शूर्पकर्णाय तुभ्यम् ।
त्रिनेत्राय पाशाङ्कुशाद्यैर्युताय निजानन्दयोगाय ढुण्ढे नमस्ते ॥ ३४॥

नराकाररूपाय कण्ठादधस्तात्तथा ह्येकदन्ताय रक्ताम्बराय ।
महाऽऽखुध्वजायाऽऽखुवाहाय नित्यं निजानन्दयोगाय ढुण्ढे नमस्ते ॥ ३५॥

अनन्तप्रसूतिश्च ते वामभागे महासिद्धिरूपा तथा दक्षिणाङ्गे ।
धृते पूर्णमाये परे देवदेव निजानन्दयोगाय ढुण्ढे नमस्ते ॥ ३६॥

स्वसंवेद्यनाम्नि पुरे संस्थिताय प्रमोदादिभिः सेव्यमानाय तुभ्यम् ।
तथेक्षोः समुद्रे सुलीलाकराय निजानन्दयोगाय ढुण्ढे नमस्ते ॥ ३७॥

समाधिस्वरूपं गणेशं स्तुवीमः कथं ब्रह्मणां ब्रह्मभूतं महात्मन् ।
तथापि स्वबुद्ध्या प्रमाणैः स्तुतोऽसि निजानन्दयोगाय ढुण्ढे नमस्ते ॥ ३८॥

वयं धन्यरूपा गणाधीश ते वै स्तवेनाऽथ पूजादिना दीनबन्धो ।
नमस्ते नमस्ते प्रसीदाऽऽशु भूमन् निजानन्दयोगाय ढुण्ढे नमस्ते ॥ ३९॥

मुद्गल उवाच ।
एवं स्तुत्वा गणाधीशं प्रणेमुस्तं प्रजापते ।
ब्रह्माणि तान्यथोवाच हर्षितः स गजाननः ॥ ४०॥

श्रीगणेश उवाच ।
वरान् ब्रूत हृदिस्थान् वै ब्रह्माणि तुष्टिमागतः ।
दास्याम्यनेन स्तोत्रेण तपसा दुर्लभानपि ॥ ४१॥

भवत्कृतमिदं स्तोत्रं मम सन्तोषकारकम् ।
भविष्यति न सन्देहः सर्वसिद्धिप्रदायकम् ॥ ४२॥

(Page खं. ९ अ. २ पान ३)
यः पठेत् पाठयेद्वाऽपि श्रावयेन्मानवोत्तमः ।
स भुक्त्वा ह्यखिलान् भोगानन्ते स्वानन्दगो भवेत् ॥ ४३॥

विजयप्रदमेतद्धि पुत्रपौत्रप्रदं भवेत् ।
धनधान्यपशूनां तु दायकं प्रभविष्यति ॥ ४४॥

अङ्गहीनजनानां तु स्वङ्गदं रोगनाशनम् ।
अलक्ष्मीसङ्कटस्यैव दहनं पाठकारिणाम् ॥ ४५॥

विद्या ज्ञानादिकं सर्वं लभतेऽनेन निश्चितम् ।
भुक्तिं मुक्तिं ब्रह्मभूयं पठनात् श्रवणात् किल ॥ ४६॥

षट्कर्मसाधने सिद्धं परकृत्यविनाशनम् ।
राजबन्धहरं चैव भविष्यति सुसेविनाम् ॥ ४७॥

एकविंशतिवारं चैकविंशति दिनानि यः ।
पठते स लभेत् सर्वमीप्सितं नात्र संशयः ॥ ४८॥

एवं गणपतेर्वाक्यं श्रुत्वा ब्रह्माणि विघ्नपम् ।
प्रणम्य हर्षयुक्तानि जगुस्तं च प्रजापते ॥ ४९॥

ब्रह्माण्यूचुः ।
वरदोऽसि गणाधीश तदा ते भक्तिमुत्तमाम् ।
देहि यया महामोहो नश्यत्यत्र न संशयः ॥ ५०॥

निजव्यापारजं देहि बोधं कथय सर्वप ।
कार्यं तच्च करिष्यामस्त्वदाज्ञावशगानि भोः ॥ ५१॥

सदाऽस्मन्निकटे नाथ तिष्ठ स्वभक्तकारणात् ।
निर्विघ्नं कुरु सर्वत्र गजानन नमोऽस्तु ते ॥ ५२॥

त्वत्समानि कुरुष्व त्वमस्मान् पादाश्रितानि ते ।
भजतां सर्वदातॄणि त्वत्प्रसादान्नमोऽस्तु ते ॥ ५३॥

यद्यदिच्छामहे नाथ तत्तत्तु सफलं भवेत् ।
सत्यसङ्कल्पजं सौख्यं देहि नो गणनायक ॥ ५४॥

एवं तेषां वचः श्रुत्वा भक्तिभावेन तोषितः ।
तथेति तान्यथोक्त्वासावन्तर्धानं चकार ह ॥ ५५॥

अष्टौ विनायकाः प्रोक्तास्तद्रूपेण गजाननः ।
तेषां सामीप्यगो भूत्वाऽतिष्ठत् सर्वार्थसिद्धये ॥ ५६॥

एतत् सर्वं समाख्यातं स्वसंवेद्यस्य चेष्टितम् ।
श्रवणात् पठनान्नृणां सर्वसिद्धिप्रदायकम् ॥ ५७॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे

नवमे खण्डे योगचरिते स्वसंवेद्यस्वरूपवर्णनं नाम प्रथमोऽध्यायः ॥ ९.१

## ९.२ अयोगचरितकथनं नाम द्वितीयोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
अधुना शृणु दक्ष त्वं निवृत्तिरूपधारिणः ।
चरितं गणनाथस्य ब्रह्मभूतपदप्रदम् ॥ १॥

स्वानन्दः सकलाधारो नानाब्रह्मसु संस्थितः ।
जगत्सु योगभावेन संयोगेन तदात्मकः ॥ २॥

स नानामायया युक्तो नानाभावपरायणः ।
भावाभावादिहीनत्वाच्छोभते नित्यमञ्जसा ॥ ३॥

अनन्तकल्पकाले तु गते सन्तोषमादधे ।
निवृत्तिमिच्छति प्राज्ञो मायाहीनत्वकारणात् ॥ ४॥

जगद्भिर्ब्रह्मभिः सार्धं गणेशमभजत्ततः ।
संयोगभावनाशार्थं सर्वतो भक्तिसंयुतः ॥ ५॥

एकाक्षरविधानेन पूजयामास तं विभुम् ।
मन्त्रं जजाप सर्वेशो ध्यात्वा हृदि गजाननम् ॥ ६॥

दक्ष उवाच ।
स्वसंवेद्यात्मकः प्रोक्तो मन्त्र एकाक्षरो महान् ।
अयोगगणनाथस्य प्रीतिदः स कथं वद ॥ ७॥

मुद्गल उवाच ।
शब्दशब्दार्थसंयुक्तो मन्त्रो गणपतेः स्मृतः ।
स्वसंवेद्यात्मकः प्राज्ञैः सर्वशास्त्रेषु सम्मतः ॥ ८॥

नामैकदेशमात्रत्वात् स एवायोगवाचकः ।
न तत्र शब्दशब्दार्थौ तयोर्योगादिकं कदा ॥ ९॥

गते वर्षशते तत्र प्रसन्नो गणनायकः ।
आययौ तं वरान् दातुं निजभक्तसुखप्रदः ॥ १०॥

दृष्ट्वा गजाननं दक्ष प्रहृष्टः सर्वसंयुतः ।

स्वानन्दः प्रणनामाथ पुपूजे भक्तिसंयुतः ॥ ११॥

दक्ष उवाच ।
सगुणो देह एतस्य निर्गुणं मस्तकं परम् ।
तयोरभेदभावेऽयं गजाननो निजात्मकः ॥ १२॥

अयोगे सगुणं नैव निर्गुणं नैव वर्तते ।
तयोः संयोगरूपं यन्नैव योगीन्द्रसत्तम ॥ १३॥

कथं गजाननश्चायमयोगे वाचकोऽभवत् ।
छिन्धि मे संशयं पूर्णं वचसा योगभाविना ॥ १४॥

मुद्गल उवाच ।
सिद्धिर्देहमयी माया बभूवे तस्य भो विधे ।
नानाभ्रमं परित्यज्य लीना जाता शरीरके ॥ १५॥

नानाज्ञानप्रभावं तु त्यक्त्वा बुद्धिः शिरोऽभवत् ।
भ्रान्तिधारकभावं सा तल्लीना सम्बभूव ह ॥ १६॥

तयोर्योगे स्वसंवेद्यं ब्रह्म संयोगधारकम् ।
गजाननाकृतिस्थं तद् बभूवे लीनभावतः ॥ १७॥

सिद्धिबुद्धिविहीनोऽयमयोगे वाचकोऽभवत् ।
गणेशो गजवक्त्रादिचिह्नयुक्तो न संशयः ॥ १८॥

शब्दशब्दार्थसंयोगैस्त्रिभिर्हीनो गजाननः ।
अयोगे शोभते दक्ष मायाभ्यां वर्जितः सदा ॥ १९॥

अथो शृणु चरित्रं त्वं प्रकृतं शान्तिदायकम् ।
स्वसंवेद्यः प्रतुष्टाव गणेशं हर्षसंयुतः ॥ २०॥

ससर्वस्वानन्द उवाच ।
अजं पुराणं परमव्ययं तं निवृत्तिमात्रं ह्यसमाधिसंस्थम् ।
अयोगरूपं गणनाथमाद्यं नमामि निर्मायिकमप्रमेयम् ॥ २१॥

न जारजं स्वेदजमण्डजं न न चोद्भिदं स्थावरजङ्गमं न ।
अनादिमध्यान्तममोघरूपं नमामि निर्मायिकमप्रमेयम् ॥ २२॥

न भूस्वरूपं न जलं प्रकाशं न वायुरूपं न खमेव ढुण्ढिम् ।
न राजसं सत्त्वतमोयुतं न नमामि निर्मायिकमप्रमेयम् ॥ २३॥

न जागृतं स्वप्नगतं न देवं सौषुप्तकं नैव तुरीयसंस्थम् ।
न बिन्दुमात्रं न च सोऽहमेव नमामि निर्मायिकमप्रमेयम् ॥ २४॥

न बोधगं नैव विबोधरूपं न मोहयुक्तं न च मोहहीनम् ।
न निर्गुणं नो सगुणं तथा तं नमामि निर्मायिकमप्रमेयम् ॥ २५॥

न कर्मरूपं न च ज्ञानरूपं समं न चाधीनतमं सदा न ।
न स्वात्मगं सर्वविकारहीनं नमामि निर्मायिकमप्रमेयम् ॥ २६॥

असत्स्वरूपं न च सत्स्वरूपं समानरूपं न च नेतिगं तम् ।
निजात्मरूपं विविधेषु नैव नमामि निर्मायिकमप्रमेयम् ॥ २७॥

(Page खं. ९ अ. २ पान ५)
अनन्तरूपं न तथैकरूपं समं न तुर्यं न च पञ्चमं तम् ।
सदा गणेशाकृतिरूपधारं नमामि निर्मायिकमप्रमेयम् ॥ २८॥

न चागतं नैव गतं गणेशमयोगरूपं प्रवदन्ति वेदाः ।
सदा निवृत्तिमयमासमन्तान्नमामि निर्मायिकमप्रमेयम् ॥ २९॥

वचोभिरारात् कथितुं कदाचिदयोगभावान् मनसो न शक्यम् ।
कदा तमप्राप्य वदामि देवं नमामि निर्मायिकमप्रमेयम् ॥ ३०॥

न सिद्धियुक्तं न च बुद्धियुक्तं न मायिकं ब्रह्ममयं परेशम् ।
अनन्तपारं गजवक्त्रधारं नमामि निर्मायिकमप्रमेयम् ॥ ३१॥

त्रिनेत्रधारं गजवक्त्रयुक्तं चतुर्भुजं चैकरदं महान्तम् ।
महोदरं वाहनहीनगं तं नमामि निर्मायिकमप्रमेयम् ॥ ३२॥

न योगनिष्ठं न विहारयुक्तं निजात्मनाम्नि नगरे न संस्थम् ।
निजे समुद्रे न विहारकारं नमामि निर्मायिकमप्रमेयम् ॥ ३३॥

न भक्तभक्तिप्रियमेव देवं तथापि योगेन निवृत्तिदं तम् ।
अपारमायामयपाशहारं नमामि निर्मायिकमप्रमेयम् ॥ ३४॥

अहं विकारेण विमोहितोऽतो भ्रमन् गणेशाधिपते महात्मन् ।
जगत्सु नानाविधब्रह्मसु प्रभो नमामि निर्मायिकमप्रमेयम् ॥ ३५॥

समाधिरूपोऽहमचिन्त्यभावः सर्वात्मकः सर्वविवर्जितोऽहम् ।
भ्रमामि मां रक्ष निवृत्तिदातर्नमामि निर्मायिकमप्रमेयम् ॥ ३६॥

सुसिद्धिबुद्धिप्रद मोहयुक्तो विभज्य नानाविधमात्मरूपम् ।

चतुः पदार्थेषु चरामि भ्रान्त्या नमामि निर्मायिकमप्रमेयम् ॥ ३७॥

सुखेलयुक्तोऽहमथो सुखेनेतरेण योगेन तदात्मना वै ।
न शान्तिजं सौख्यमणु ह्यविन्दं नमामि निर्मायिकमप्रमेयम् ॥ ३८॥

अनन्तभावेन विमोहितं मां रक्षस्व ते पादप्रियं गणेश ।
निवृत्तिकां देहि परार्थभूतां नमामि निर्मायिकमप्रमेयम् ॥ ३९॥

नमो गणेशाय निवृत्तिधारिणे नमः परेशाय सुखाब्धिवासिने ।
नमश्च हेरम्ब महोदराय ते नमो नमो ब्रह्मपते सुशान्तये ॥ ४०॥

अयोगरूपं गणनायकं तं प्रवेशहीनात् कथमेव ढुण्ढे ।
दयापरं स्तौम्यधुना च तारय नमो नमो विघ्नपते नमस्ते ॥ ४१॥

मुद्गल उवाच ।
एवं स्तुत्वा गणेशानं स्वानन्दः प्रणनाम तम् ।
भक्त्या हर्षेण संयुक्तस्तमुवाच गजाननः ॥ ४२॥

श्रीगणेश उवाच ।
वरं वृणु महाभाग सर्वं दास्यामि चेप्सितम् ।
मायामायिकभेदैस्त्वं दुःखितोऽसि न संशयः ॥ ४३॥

त्वया कृतमिदं स्तोत्रं सर्वशान्तिप्रदं भवेत् ।
न मायासम्भवं दुःखं प्रलभेत् पाठतो नरः ॥ ४४॥

यं यमिच्छति तं तं वै दास्यामि स्तोत्रपाठतः ।
असाध्यं साधयेन् मर्त्यः श्रवणेन निजप्रदम् ॥ ४५॥

एवं श्रुत्वा गणेशस्य वचनं स्वस्वरूपकम् ।
जगाद तं प्रणम्यादौ कृत्वा करपुटं विधे ॥ ४६॥

ससर्वस्वानन्द उवाच ।
यदि तुष्टोऽसि विघ्नेश तदा देहि निवृत्तिजम् ।
सुखं नान्यं वरं भ्रान्तिं मायामेतां निवारय ॥ ४७॥

तथेति तमुवाचैव गणेशोऽन्तर्दधे ततः ।
(Page खं. ९ अ. ३ पान ६)
स्वानन्दः खिन्नभावेन स्वस्थाने संस्थितोऽभवत् ॥ ४८॥

सस्मारायोगनाथं तं ततश्चित्रं बभूव ह ।

विश्वानि ब्रह्ममुख्यानि स्वानन्दे लयमाययुः ॥ ४९॥

ततः स्वयं निजानन्दो नष्टस्तत्र बभूव ह ।
मायाहीनप्रभावेणायोगस्थः शुशुभे मुदा ॥ ५०॥

संयोगमायया हीनो न ददर्श स किञ्चन ।
स्वात्मानं वाऽपरं मुख्यं अयोगं गणनायकम् ॥ ५१॥

सर्वबन्धविनिर्मुक्तं बभूव स्वस्वरूपकम् ।
एतत् सर्वं समाख्यातमयोगस्य चरित्रकम् ॥ ५२॥

अयोगे दक्ष नैवास्ति त्वमहं ब्रह्म शाश्वतम् ।
न गणेशः स्वसंवेद्यं तेन निर्वृत्तिमाप्नुयात् ॥ ५३॥

यः पठेच्छ्रुणुयाद्वा यो ह्ययोगस्य चरित्रकम् ।
स भुक्त्वा सकलान् भोगानन्ते निर्वृत्तिमाप्नुयात् ॥ ५४॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
नवमे खण्डे योगचरिते अयोगचरितकथनं नाम द्वितीयोऽध्यायः ॥ ९.२

## ९.३ गणेशस्वरूपवर्णनं नाम तृतीयोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
अधुना शृणु दक्ष त्वं पूर्णशान्तिप्रदायकम् ।
चरितं गणनाथस्य नानायोगेश्वरस्य यत् ॥ १॥

अयोगो मायया हीनः सदा बन्धविवर्जितः ।
निमग्नश्च ब्रह्मसुखे तिष्ठ नित्यं विशेषतः ॥ २॥

स्वानन्दाख्यं परं ब्रह्म नष्टं गाणेशयोगतः ।
पुनः सृष्टं गणेशेन पूर्णयोगस्वरूपिणा ॥ ३॥

एवं पुनः प्रनष्टं तत् कालेन बहुना विधे ।
पुनः सृष्टं पुनर्नष्टं कल्पा एवं गता बहु ॥ ४॥

नित्यं त्वयोगसंस्थः स गणेशो ब्रह्मनायकः ।
विचारमकरोच्चित्ते दृष्ट्वा स्वानन्दजं भ्रमम् ॥ ५॥

अहो मायाप्रभावेण ब्रह्म स्वानन्दधारकम् ।

नानाभावयुतं भूत्वा पुनर्भवति नश्यति ॥ ६॥

मायाविहीनभावेनाऽहं सदा मोहवर्जितः ।
अखण्डयोगसंयुक्तोऽतिष्ठं ब्रह्मपरायणः ॥ ७॥

अविनाशिपदं दत्तं मह्यं केन महात्मना ।
न ब्रह्म नाशसंयुक्तमविनाशि न विद्यते ॥ ८॥

दक्ष उवाच ।
अविनाशि समाख्यातं देहिरूपं पुरा त्वया ।
स्वत उत्थानकेनैव सृष्टं तदेव निश्चितम् ॥ ९॥

स्वसंवेद्यात् परं ब्रह्मायोगरूपं प्रकीर्तितम् ।
तदेव केन योगीश विनाशि कथ्यते त्वया ॥ १०॥

मुद्गल उवाच ।
नाशाऽनाशादिभेदाश्च स्वानन्दात् सम्भवन्ति च ।
भेदाऽभेदादिहीनं तत् स्वसंवेद्यं प्रकीर्तितम् ॥ ११॥

शिष्यस्य बोधदानार्थं योगिनस्तं वदन्ति च ।
कथितुं नैव शक्यत्वात् किञ्चिद्भेदं प्रजापते ॥ १२॥

अयोगमविनाशाख्यं कथयाम्यधुना परम् ।
(Page खं. ९ अ. ३ पान ७)
नाशरूपं स्वसंवेद्यं बोधार्थं नात्र संशयः ॥ १३॥

अयोगश्चिन्तयाऽऽविष्टो बभूवे बन्धहानतः ।
निवृत्तिजं सुखं तुच्छं मानयामास चेतसा ॥ १४॥

सदा मायाविहीनत्वं ममास्त्यत्र न संशयः ।
मायायुक्तविहीनत्वं नैव ब्रह्मणि विद्यते ॥ १५॥

विचार्य खेदसंयुक्तो योगमार्गपरोऽभवत् ।
अयोगो हृदि सञ्चिन्त्य तपस्तताप दारुणम् ॥ १६॥

दशवर्षैर्गणाध्यक्षः प्रसन्नो हृदि संस्थितः ।
दर्शयामास मन्त्रं स एकाक्षरं स्वकीयकम् ॥ १७॥

दृष्ट्वा योगो जजापाऽतिहर्षितो मन्त्रमुत्तमम् ।
ध्यात्वा मन्त्रस्वरूपस्थं गणेशं शान्तिदायकम् ॥ १८॥

ततः स्वल्पेन कालेन रूपं गणपतेः शुभम् ।
ददर्श गजवक्त्रादि चिह्नयुक्तं महाप्रभुः ॥ १९॥

ततोऽतिविस्मितो भूत्वा विचारमकरोत् हृदि ।
कोऽयं गजाननो देवः स्त्रीभ्यां संशोभते हृदि ॥ २०॥

गणेशकृपया ज्ञानं बभूव तस्य शाश्वतम् ।
तेन सर्वमयोगेन ज्ञातं विघ्नेशचेष्टितम् ॥ २१॥

ततोऽतिहर्षितो भूत्वा ध्यात्वा देवं गजाननम् ।
मन्त्रं जजाप योगज्ञः शान्तिप्राप्त्यर्थमादरात् ॥ २२॥

स्वयं स्वल्पेन कालेन पुरो ययौ गजाननः ।
वरदो भक्तवात्सल्यान् महाभक्तस्य भो विधे ॥ २३॥

दक्ष उवाच ।
आश्चर्यं विप्र वदसि ज्ञायते न मया परम् ।
रहस्यं तेऽद्य वाक्यस्य योगग्रथितकस्य च ॥ २४॥

अष्टौ विनायकाः प्रोक्तास्ते सर्वे गजवक्त्रिणः ।
एकदन्तादिचिह्नैश्च संयुक्ता गणपाः किल ॥ २५॥

संयोगस्थं गणेशानं भजतेऽनन्यमानसाः ।
तेषां हृदि गणेशानः प्रकटो जायते यदा ॥ २६॥

तदा ते विस्मिता भूत्वा न जानन्ति स्वरूपकम् ।
नित्यं गजाननाः प्राज्ञा गजाननं कथं मुने ॥ २७॥

एकाक्षररहस्यं ते न जानन्ति कथं प्रभो ।
एकाक्षरस्य भावेन संस्थिता नित्यमञ्जसा ॥ २८॥

तथा संयोगरूपस्थो गणेशो गणनायकम् ।
मन्त्रयुक्तं न जानाति मन्त्राकृतिधरः कथम् ॥ २९॥

अयोगगणनाथोऽयं गजाननाकृतिं धरन् ।
समन्त्रो मन्त्रयुक्तं तं न जानाति गणेश्वरम् ॥ ३०॥

कीदृशो गणनाथस्तु पूर्णयोगप्रवाचकः ।
यं न जानन्ति विघ्नेशास्तदाकृतिधरा अपि ॥ ३१॥

संयोगे गणनाथोऽपि सिद्धिबुद्धिसमन्वितः ।

अयोगे सिद्धिबुद्धिभ्यां हीन एव स वर्ण्यते ॥ ३२॥

पूर्णयोगे गणेशानः संयोगायोगवर्जितः ।
मायाभ्यां संयुतः प्रोक्तः कथं वद रहस्यकम् ॥ ३३॥

मुद्गल उवाच ।
सम्यक् पृष्टं त्वया दक्ष रहस्यं परमाद्भुतम् ।
योगिनां सुखदं पूर्णं शान्तिदं भावितात्मनाम् ॥ ३४॥

एकाग्रचित्तभावेन शृणु तस्य चरित्रकम् ।
अन्यथा भ्रान्तिसंयुक्तो भविष्यसि निरन्तरम् ॥ ३५॥

यथा विश्वमिदं नित्यं ब्रह्माकारं प्रवर्तते ।
तथापि ब्रह्मरूपं तन्न जानाति हृदि स्थितम् ॥ ३६॥

नामरूपविहीनत्वान् मन्त्रस्तस्य न विद्यते ।
तपसा युक्तभावेन प्रणवं पश्यति प्रभुम् ॥ ३७॥

सर्वाकारं महाबीजं प्रणवाकृतिरूपिणम् ।
दृष्ट्वा विस्मयभावेन विचारमकरोत् हृदि ॥ ३८॥

(Page खं. ९ अ. ३ पान ८)
तपसा योगभावेन चतुष्पादं जगन्मयम् ।
जानाति कृपया तस्य मन्त्रराजं जगद्यथा ॥ ३९॥

ततो योगप्रभावेण प्रणवार्थस्वरूपिणम् ।
देवं सर्वात्मभावस्थं पश्यति विश्वमञ्जसा ॥ ४०॥

दृष्ट्वाऽतिविस्मितं भूत्वा विचारयति चेतसि ।
तपसा योगभावेन तं जानाति महाप्रभुम् ॥ ४१॥

ततो योगप्रभावेण शान्तिस्थं गणनायकम् ।
पश्यति वक्रतुण्डाख्यं ब्रह्म स्वानन्दगं परम् ॥ ४२॥

प्रणवो देहरूपश्चेत् प्रणवार्थो गजाकृतिः ।
शिरस्तयोश्च संयोगे गणेशो योगरूपधृक् ॥ ४३॥

योगाकारं महद्रूपं दृष्ट्वा विस्मितमानसम् ।
विश्वं भक्तिसमायुक्तं भजनार्थं मनो दधे ॥ ४४॥

एतादृशं सुशान्तिस्थं ब्रह्म देहधरं कथम् ।

भवति तस्य सेवा वै कुर्वे नित्यं महात्मनः ॥ ४५॥

हृदि स्थितं तस्य भावं ज्ञात्वा रूपधरः प्रभुः ।
गजाननो बभूवापि पुनर्दृष्ट्वाऽतिविस्मितम् ॥ ४६॥

तं पश्यति प्रजानाथ कोऽयं भिन्नस्वरूपधृक् ।
तस्तस्तं तस्य जानाति कृपया योगसेवया ॥ ४७॥

गणेशानं मूर्तिधरं भजतेऽनन्यभावतः ।
मन्त्रादिना रहस्येन जानीहि विश्वमादरात् ॥ ४८॥

तथा गणेश्वराः प्रोक्ता अष्टौ योगप्रवाचकाः ।
तेषां हृदि स्थितं ब्रह्म स्वसंवेद्यं न संशयः ॥ ४९॥

महैश्वर्यप्रसंयुक्ता न जानन्ति कदाचन ।
वयं ब्रह्मस्वरूपाश्च प्रत्येकं मानयन्ति ते ॥ ५०॥

न मत्तः परमं किञ्चिज्ज्ञात्वा मोहसमन्विताः ।
विश्वात्मनि च विश्वस्मिन् क्रीडायुक्ता बभूविरे ॥ ५१॥

कृत्वा नानाविधं खेलं नानाकल्पपरायणाः ।
एवं बहौ गते काले शान्तिमिच्छन्ति शाश्वतीम् ॥ ५२॥

ततः क्रीडां विहायैव स्वमहिम्न्यभवन् स्थिताः ।
तथापि ते पुनर्विश्वप्रवशाः ससृजुः स्वयम् ॥ ५३॥

ततस्ते खेदसंयुक्ता विचारं कुर्वते परम् ।
केन स्म प्रेरिता विश्वं सृजामो विविधं वयम् ॥ ५४॥

अतः स्वाधीनता नो न विद्यतेऽपि कदाचन ।
वयं न ब्रह्मरूपाश्च मायामोहयुताः सदा ॥ ५५॥

एवं मनसि सन्धार्य तपश्चेरुः समाधिदम् ।
तपसा योगसंयुक्ता बभूवुर्नात्र संशयः ॥ ५६॥

क्रमेण गणपाः सर्वे पूर्णयोगस्वरूपिणि ।
लयं ययुः सुशान्तिस्थाः शान्तरूपे प्रजापते ॥ ५७॥

तत्र विधिं प्रवक्ष्यामि शृणु संशयनाशकम् ।
योगोऽष्टधा समाख्यातस्तत् स्वरूपं सुयोगदम् ॥ ५८॥

शमो दम आसनं च प्राणायामश्चतुर्थकः ।
प्रत्याहारो धारणा वै ध्यानं समाधिरष्टमः ॥ ५९॥

स्वधर्मयुक्तभावेन मनो नियम्य यत्नतः ।
यतते ब्रह्मप्राप्त्यर्थं स शमः परिकीर्तितः ॥ ६०॥

स्वधर्मस्थितिमास्थाय नियमादिस्वभावतः ।
दमेद्देहं सुशान्त्यर्थं दमस्तेन प्रकथ्यते ॥ ६१॥

स्वस्तिकादीनि भो दक्ष आसनानि विशेषतः ।
साधयित्वा समातिष्ठेद्योगार्थमासनं स्मृतम् ॥ ६२॥

प्राणायामं ततोऽभ्यस्य लघ्वादिकं क्रमेण च ।
योगार्थं साधयेद्वायुं स प्राणायाम उच्यते ॥ ६३॥

नानाविषयभोगार्थं गच्छन्तीन्द्रियकाणि तु ।
तेभ्यस्तानि समागृह्य योगयुक्तानि कारयेत् ॥ ६४॥

(Page खं. ९ अ. ३ पान ९)
स मनांसि सुशान्त्यर्थं हृत्वा हृत्वा पुनः पुनः ।
इन्द्रियाणि नरः कुर्यात् प्रत्याहारः स वै स्मृतः ॥ ६५॥

महावाक्यादिभिः प्रोक्तं ब्रह्म शब्दार्थभावतः ।
सन्धार्य स श्रमेद्दक्ष धारणा सा प्रकीर्तिता ॥ ६६॥

हृदि ब्रह्मावबोधश्च जायते ऐक्यभावतः ।
स्वस्य तेन समाख्यातं ध्यानं ब्रह्म सुखप्रदम् ॥ ६७॥

ततो ब्रह्मणि सोऽप्येवं लीनः सञ्जायते परे ।
न ब्रह्म न स्वयं तत्र समाधिः परिकीर्तितः ॥ ६८॥

इदं योगाष्टकं प्रोक्तं योगप्राप्त्यर्थमादरात् ।
सेविनां ब्रह्मदं पूर्णं भविष्यति न संशयः ॥ ६९॥

तत्र मायायुता जीवा भिन्नदेहधरा मताः ।
तेषामष्टकमेवं तद्वर्तते साधनात्मकम् ॥ ७०॥

ब्रह्माकाराणि प्रोक्तानि तत्त्वानि विविधानि तु ।
विश्वरूपाणि सर्वाणि ब्रह्माण्यन्नमुखानि च ॥ ७१॥

तेषां योगः समाख्यातस्त्रिविधो नाऽत्र संशयः ।

देहादिभावशून्यत्वात् तच्छृणुष्व सुखप्रदम् ॥ ७२॥

धारणाध्यानके दक्ष समाधिः परिकीर्तितः ।
त्रिभिर्योगं समाराध्य शान्तिगानि भवन्ति तु ॥ ७३॥

स्वस्वब्रह्मणि ये सन्ति भोगा ब्रह्मसुखात्मकाः ।
तांस्त्यक्त्वा धारयेद्ब्रह्म तपस्तदेव कथ्यते ॥ ७४॥

पूर्णशान्त्यर्थमत्यन्तं ब्रह्माणि सम्भवन्ति चेत् ।
त्यक्त्वा भोगांस्तपस्तेषां ज्ञातव्यं विबुधैः परम् ॥ ७५॥

मनोवाणीविहीनं न मनोवाणीमयं न च ।
ब्रह्म वेदेषु विख्यातं तदेव गणनायकः ॥ ७६॥

न तत्र सगुणं दक्ष निर्गुणं नैव वर्तते ।
गणेशे पश्य वेदेषु योगरूपस्ततः स्मृतः ॥ ७७॥

ब्रह्माणि खेदयुक्तानि पराधीनतया यदा ।
तपश्चेरुस्तदा तानि विचार्य ब्रह्मप्राप्तये ॥ ७८॥

अतितपोबलेनैव हृदि स्फूर्तिः प्रजायते ।
योगस्य मन्त्रराजं तं जानीहि ब्रह्मणां विधे ॥ ७९॥

ततो हर्षयुतान्येवानुभवं सस्मरुस्तदा ।
जपस्तदेव तेषां वै ब्रह्मणां भवति प्रभो ॥ ८०॥

हृदि संस्थं ततो योगं ददृशुस्तानि सर्वदा ।
तदेव गणराजस्य रूपं तत्र प्रकीर्तितम् ॥ ८१॥

ततस्तल्लीनभावेन तिष्ठन्ति ब्रह्मकानि वै ।
गणेशस्य कृपा ज्ञेया तत्र सा कथ्यते बुधैः ॥ ८२॥

योग एतादृशं ब्रह्म यदि देहयुतं भवेत् ।
तदा तं प्रभजिष्यामो नित्यमिच्छन्ति तानि तु ॥ ८३॥

ब्रह्मदेहधरः सोऽपि बभूव भक्तिमोहितः ।
आययौ वरदानार्थं तेषामग्रे गजाननः ॥ ८४॥

ब्रह्माकाराणि चिह्नानि कथितानि पुरा मया ।
गणेशस्य स्वरूपे तु तान्यपश्यंश्च तादृशम् ॥ ८५॥

ततस्तानि प्रणेमुस्तं पुपूजुस्तं च नित्यशः ।
अन्ते योगमयान्येव बभूवुर्नात्र संशयः ॥ ८६ ॥

एतत्सर्वं समाख्यातं ब्रह्मणां चरितं मया ।
तपोयोगादिकाचारमन्यच्छृणु प्रजापते ॥ ८७ ॥

वक्रतुण्डो गणेशानो यदि खेदसमन्वितः ।
पराधीनतया दक्ष शान्तियोगपरोऽभवत् ॥ ८८ ॥

तदा तपोयुतः सोऽपि त्रेधा योगार्थमादरात् ।
श्राम्येत्तेन हृदिस्थं तं लोकयेदेकदन्तकम् ॥ ८९ ॥

देहेषु ब्रह्मभावेन वक्रतुण्डः स्थितोऽभवत् ।
तस्माद्देही स्थितः श्रेष्ठो भिन्नाकारः प्रकीर्तितः ॥ ९० ॥

अतोऽयं वक्रतुण्डस्तं गजाननं परात्परम् ।
एकदन्तं न जानाति तत्र भेदं वदाम्यहम् ॥ ९१ ॥

त्रिगुणाकारदेहश्च तुरीयं मस्तकं मतम् ।
वक्रतुण्डस्तयोर्योगे बिन्दुब्रह्मप्रवाचकः ॥ ९२ ॥

चतुर्विधेषु देहेषु मोहयुक्तं च यत् स्मृतम् ।
सदा भेदविहीनं तज्जीवसंज्ञं प्रकथ्यते ॥ ९३ ॥

मोहहीनं सदा साक्षिरूपं परात्मधारकम् ।
एकदन्तस्तयोर्योगे सोऽहम्मात्रात्मकः स्मृतः ॥ ९४ ॥

जीवो देहस्वरूपस्थः परमात्मा शिरः स्मृतम् ।
गजाकारं न सन्देह एकदन्तस्य नित्यदा ॥ ९५ ॥

जीवात्मा परमात्मानौ दृष्ट्वा भेदविवर्जितौ ।
विस्मितः स भवेत्तत्र वक्रतुण्डो गजाननः ॥ ९६ ॥

नानाभेदसमायुक्तो वक्रतुण्डो मयोदितम् ।
भेदहीनमेकदन्तं दृष्ट्वा पप्रच्छ तं पुनः ॥ ९७ ॥

हृदिस्थं सोऽहमादौ यद्ब्रह्माकारं प्रकथ्यते ।
बिन्दोस्तदेकदन्ताख्यं न देहादियुतं कदा ॥ ९८ ॥

सेवार्थं वक्रतुण्डेन प्रार्थितं हृदि सङ्गतम् ।
ब्रह्म तदेव भो दक्ष एकदन्तो बभूव ह ॥ ९९ ॥

यथा जगदिदं सर्वं ब्रह्माकारं प्रकीर्तितम् ।
तथा ज्ञेयं वक्रतुण्डोऽपि ह्येकदन्तस्वरूपधृक् ॥ १००॥

सगुणं नरसंज्ञस्थं निर्गुणं गजवाचकम् ।
तयोर्योगे परं ब्रह्म गजाननः प्रकथ्यते ॥ १०१॥

सेवार्थं प्रार्थितं सर्वैस्तदेव देहवानभूत् ।
गणेशो ब्रह्मरूपाख्यो नानाब्रह्मसु संस्थितः ॥ १०२॥

अतो गणेश्वरं दक्ष न जानाति गणेश्वरः ।
नानामोहसमायुक्तो भ्रान्तिभावात् सुशान्तिदम् ॥ १०३॥

स्वत उत्थान भावे तु देहो बिन्दुमयः स्मृतः ।
सोऽहं शिरो गजाकारं तयोर्योगे महोदरः ॥ १०४॥

एवं नानाविभेदैश्च नानाब्रह्मपरायणः ।
गणेश्वरः स्थितस्तेषु गजाननादिचिह्नितः ॥ १०५॥

संयोगे गणनाथस्य स्वत उत्थानकं वपुः ।
उत्थानं परतस्तस्य मस्तकं नात्र संशयः ॥ १०६॥

अयोगे बुद्धिहीनं तु मस्तकं सिद्धिवर्जितम् ।
वपुस्तयोर्न संयोगे गणेशः परिकीर्तितः ॥ १०७॥

पूर्णयोगे शरीरं तु मतं संयोगवाचकम् ।
अयोगवाचकं तस्य मस्तकं तु गजाकृति ॥ १०८॥

अविनाशार्थसंयुक्तो गजशब्दः प्रकीर्तितः ।
अयोगान्न परं ब्रह्माविनाशाख्यं प्रकथ्यते ॥ १०९॥

संयोगायोगभावाख्या भ्रान्तिः सर्वत्र पठ्यते ।
निरोधचित्ताग्र दक्ष सा सिद्धिः परिकीर्तिता ॥ ११०॥

संयोगायोगभावस्था बुद्धिर्भ्रान्तिधरा मता ।
तयोः स्वामी गणाध्यक्षः पूर्णयोगप्रवाचकः ॥ १११॥

अहं गणेशरूपश्चेत् संयोगायोगकौ मम ।
कुतो मायाप्रभावाख्यौ तेन शान्तिं लभेन्नरः ॥ ११२॥

सर्वत्राऽभेदभावेन संयोगात्मा गजाननः ।

तिष्ठत्यत्र न सन्देहो युतः संयोगमायया ॥ ११३॥

सर्वत्राऽभेदहीनश्च योगरूपो गजाननः ।
अयोगमायया युक्तस्तिष्ठति व्यतिरेकतः ॥ ११४॥

यदि सर्वात्मकं योगं वदामि गणनायकम् ।
नानाब्रह्मसुसंस्थं तमन्वयाख्यं तदा विदुः ॥ ११५॥

नागतं न गतं योगं कदाचिच्चेद्गजाननम् ।
नानाब्रह्मसु मुक्तं तं व्यतिरेकात्मकं जगुः ॥ ११६॥

(Page खं. ९ अ. ४ पान ११)
अतश्चित्तलयेनैवाऽहं गणेशो न संशयः ।
चित्तपञ्चकमुत्सृज्य पूर्णयोगमवाप्नुयात् ॥ ११७॥

तत्र समाधिजं सौख्यं वदामि युक्तिभावतः ।
गणेशोऽहं तदाकारो भवामि यदि योगतः ॥ ११८॥

तदा संयोगजः प्रोक्तोऽनुभवो योगिनां हृदि ।
यदाऽहं गणनाथश्चेन्नागतो न गतः कदा ॥ ११९॥

तदा ह्ययोगशः प्रोक्तोऽनुभवः शान्तिदायकः ।
अतोऽयोगमयो योगः कथं तत्र प्रवर्तते ॥ १२०॥

चित्तं नानाविधं दक्ष संयोगायोगधारकम् ।
योगे योगात्मकोऽहं च तदा शान्तिः प्रलभ्यते ॥ १२१॥

शान्तीनां शान्तिरूपा सा योगशान्तिः प्रजापते ।
तस्मात् परं विद्यते न ब्रह्म योगात् सुनिश्चितम् ॥ १२२॥

अतोऽयं गणनाथस्तु ब्रह्मणस्पतिरुच्यते ।
संयोगाऽयोगकादीनां ब्रह्मणां पातृभावतः ॥ १२३॥

एतत् सर्वं समाख्यातं रहस्यं परमाद्भुतम् ।
गजाननस्य ते दक्ष प्रकृतं शृणु साम्प्रतम् ॥ १२४॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खण्डे योगचरित्रे गणेशस्वरूपवर्णनं नाम तृतीयोऽध्यायः ॥ ९.३

## ९.४ पूर्णयोगचरितवर्णनं नाम चतुर्थोऽध्यायः

॥ श्रीगणेशाय नमः ॥

तपसा भक्तिभावेनागतं दृष्ट्वा गजाननम् ।
अयोगो हर्षितोऽत्यन्तमुत्थाय प्रणनाम तम् ॥ १॥

ततः पूज्य गणेशानं प्रभुं नानोपचारकैः ।
पुनः प्रणम्य विघ्नेशं तुष्टाव करसम्पुटः ॥ २॥

अयोग उवाच ।
शान्तिस्वरूपाय सुशान्तिदाय वाणीमनोहीनतमाय ढुण्ढे ।
वाणीमनोयुक्तविचारिणे वै योगाय योगाधिपते नमस्ते ॥ ३॥

वाणीमनोयुक्तमयं वदामि नो विश्वरूपोऽसि कथं स्तवीमि ।
नित्यं गणेशाय नमो महात्मन् योगाय योगाधिपते नमस्ते ॥ ४॥

वाणीमनोहीनमयं कथं त्वां ब्रुवेऽद्य संयोगमयं कदा च ।
नो योगरूपं त्वथ ते नमो वै योगाय योगाधिपते नमस्ते ॥ ५॥

त्वत्तः प्रसूतानि महानुभाव ब्रह्माणि विश्वानि पराणि भूयः ।
त्वय्येव लीनानि ह्यभिन्नभावाद्योगाय योगाधिपते नमस्ते ॥ ६॥

नित्यं ह्ययोगाय निवृत्तिदाय मायाविहीनाय गणाधिपाय ।
वाणीमनोहीनतया सुलभ्य योगाय योगाधिपते नमस्ते ॥ ७॥

स्वानन्दरूपाय सुशान्तिदाय सिद्ध्या च बुद्ध्या सह खेलकाय ।
वाणीमनोहीन निजात्मलभ्य योगाय योगाधिपते नमस्ते ॥ ८॥

अव्यक्तरूपाय च साहजाय मोहेन हीनाय सदा शिवाय ।
त्रैविध्यनाथाय च नेति कर्त्रे योगाय योगाधिपते नमस्ते ॥ ९॥

सामान्यरूपाय त्रयीमयाय द्वन्द्वप्रकाशाय च विष्णवे ते ।
आनन्दनाथाय सुखेलकाय योगाय योगाधिपते नमस्ते ॥ १०॥

आत्मस्वरूपाय सदाऽमृतस्थयोगेन संलभ्यतमाय भानो ।
भेदैर्विहीनाय च जीवनाय योगाय योगाधिपते नमस्ते ॥ ११॥

नानाप्रभेदेषु च तन्मयाय सर्वस्वरूपाय च शक्तये ते ।
आनन्त्यभावैश्च सुमोहदाय योगाय योगाधिपते नमस्ते ॥ १२॥

साक्षिस्वरूपाय च साङ्ख्ययोगलभ्यस्वरूपाय सदात्मसंस्थ ।
बोधेन हीनाय परात्पराय योगाय योगाधिपते नमस्ते ॥ १३॥

बोधस्वरूपाय सङ्ख्याविहारकर्त्रे सदा पालकभावधारिन् ।
त्रैविध्यनाथाय महोदराय योगाय योगाधिपते नमस्ते ॥ १४॥

सोहंस्वरूपाय च चिन्मयाय मोहेन युक्ताय च हीनकाय ।
देहिस्वरूपेण विहारकर्त्रे योगाय योगाधिपते नमस्ते ॥ १५॥

बिन्दुप्रचुराय चतुष्पदाय चतुर्विधेषु प्रभवाय तुभ्यम् ।
आनन्त्यतत्त्वाय च देहभोक्त्रे योगाय योगाधिपते नमस्ते ॥ १६॥

तुर्यात्मदेहाय लयात्मकाय कालस्वरूपाय गणेश्वराय ।
नादात्मकायाऽथ त्रिदेहगाय योगाय योगाधिपते नमस्ते ॥ १७॥

आनन्दकोशात्मकसंस्थिताय प्राज्ञाय सौषुप्तमयाय तुभ्यम् ।
नित्येश्वरायैव तयोः प्रचारिन् योगाय योगाधिपते नमस्ते ॥ १८॥

सर्वान्तरस्थाय च सूक्ष्मकाय स्वप्नप्रचुराय च तैजसाय ।
हिरण्यगर्भाय तयोः प्रचारिन् योगाय योगाधिपते नमस्ते ॥ १९॥

बाह्यस्थितायान्नमयाय विश्ववैश्वानरायैव तयोः प्रचारिन् ।
स्थूलस्वरूपाय च जागृदास्थ योगाय योगाधिपते नमस्ते ॥ २०॥

विश्वस्यद्वैविध्यमयाय तुभ्यं नानाण्डरूपाय च खेलकाय ।
शक्ते च धात्रे हरये शिवाय योगाय योगाधिपते नमस्ते ॥ २१॥

एते गणेशाधिपते कलांशा विघ्नेश्वरास्ते गणनायकाय ।
न त्वं सदैतैः सहितो हि तुभ्यं योगाय योगाधिपते नमस्ते ॥ २२॥

स्तुमः कथं नाथ गणेशरूपं संयोगहीनं च ह्ययोगहीनम् ।
तादात्म्यरूपं भव तुष्टचित्तं योगाय योगाधिपते नमस्ते ॥ २३॥

मुद्गल उवाच ।
एवं स्तुत्वा गणेशानं प्रणनाम कृताञ्जलिः ।
अयोगस्तं गणाधीशो जगाद घननिःस्वनः ॥ २४॥

गणेश उवाच ।
वरान् वृणु महाभाग मनसीप्सितरूपकान् ।
दास्यामि भक्तितुष्टोऽहं स्तोत्रेणानेन योगप ॥ २५॥

त्वया कृतमिदं स्तोत्रं योगशान्तिपदप्रदम् ।
पठतां शृण्वतां नित्यं नानासिद्धिप्रदं भवेत् ॥ २६॥

यं यमिच्छसि तं तं वै दास्यामि स्तोत्रपाठतः ।
मयि प्रीतिकरं चास्तु भक्तिभावप्रदं तथा ॥ २७॥

एकविंशतिवारं चैकविंशति दिनावधि ।
पठते तस्य सर्वं च दास्यामि दुर्लभं हि चेत् ॥ २८॥

एवमुक्त्वा गणेशानः सस्वजे तं गणाधिपम् ।
अयोगरूपिणं हर्षसंयुक्तं प्रचकार ह ॥ २९॥

ततोऽयोगो गणाध्यक्षं प्रणम्य च पुनः पुनः ।
जगाद भक्तिसंयुक्तो हृष्टरोमा सुहर्षितः ॥ ३०॥

अयोग उवाच ।
यदि ढुण्ढे वरान् मे त्वं दास्यसि भक्तिमोहितः ।
तदा ते पादयुग्मे मे भक्तिं देहि दृढां पराम् ॥ ३१॥

पूर्णयोगस्वरूपस्थं मां कुरुष्व गजानन ।
(Page खं. ९ अ. ५ पान १३)
सुखं मुक्तस्वरूपस्थं नाथ नेच्छामि ते नमः ॥ ३२॥

मुद्गल उवाच ।
अयोगगणराजस्य श्रुत्वा वचनमुत्तमम् ।
जगाद तं गणेशानस्तथेत्यन्तर्हितोऽभवत् ॥ ३३॥

अयोगस्तं हृदि स्थाप्य भजतेऽनन्यमानसः ।
अन्ते योगमयः सोऽपि बभूवे मोक्षनायकः ॥ ३४॥

इति ते सर्वमाख्यातं चरितं गणपस्य यत् ।
पूर्णयोगधरस्यापि समासेन प्रजापते ॥ ३५॥

अतस्त्वं गणराजं तं भजस्व भक्तिसंयुतः ।
तेन यज्ञमिमं पूर्णं करिष्यसि न संशयः ॥ ३६॥

अन्ते योगयुतश्चैव ब्रह्मभूतो भविष्यसि ।
आज्ञां देहि गमिष्यामि त्वदातिथ्यसुतोषितः ॥ ३७॥

रहस्यं गणनाथस्य कथितं सकलं मया ।

नान्यत् किञ्चिदतो दक्ष परं वेदादिसम्मतम् ॥ ३८॥

शृणुयाद्यः पठेद्वाऽपि स सर्वं प्राप्नुयाच्छुभम् ।
अन्ते योगमयो भूत्वा सन्तिष्ठेत् गणपात्मकः ॥ ३९॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे योगचरिते नवमे खण्डे पूर्णयोगचरितवर्णनं नाम चतुर्थोऽध्यायः ॥ ९.४

## ९.५ सार्वभौमयोगो नाम पञ्चमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
धन्योऽहं कृतकृत्योऽहं कृतस्त्वया महामुने ।
येन गणेशमाहात्म्यं श्रावितं योगदायकम् ॥ १॥

गणेशगीतासारादि कथितं तु विशेषतः ।
ज्ञानं योगप्रदं पूर्णं सङ्क्षेपेण त्वया परम् ॥ २॥

तन्न बुद्धं मया सर्वमतः सौलभ्यतो वद ।
योगं क्रमयुतं पूर्णं येन योगी नरो भवेत् ॥ ३॥

सूत उवाच ।
एवं पृष्टो महायोगी मुद्गलस्तमुवाच यत् ।
हर्षेण महता युक्तस्तत्तेऽहं कथयामि तु ॥ ४॥

मुद्गल उवाच ।
धन्योऽसि कृतकृत्योऽसि साक्षाद्गणपतेः किल ।
विभूतिवाचकस्तत्र न चित्रमिदमुत्तमम् ॥ ५॥

त्वया पृष्टं महाभाग लोकोपकारकारकम् ।
सर्वेषां सुलभत्वेन योगशान्तिपदप्रदम् ॥ ६॥

कथयामि च ते प्रीत्या गुह्यं वेदरहस्यकम् ।
शृणुष्वैकमना दक्ष योगं शान्तिप्रदायकम् ॥ ७॥

चित्तं पञ्चविधं प्रोक्तं तेषु पञ्चविधो रसः ।
सरसं चित्तमुत्सृज्य योगी भवति मानवः ॥ ८॥

क्षिप्तं मूढं च विक्षिप्तमेकाग्रं च निरोधकम् ।

चित्तं पञ्चविधं विद्धि जगत्सु ब्रह्मसु स्थितम् ॥ ९॥

व्यष्टिभावे स्थिता ये तु जन्तवो विविधात्मकाः ।
लक्षचतुरशीतिषु योनिषु सम्भवाः किल ॥ १०॥

देहभोगादिमार्गेषु कुशलाः सम्भवन्ति ये ।
तेषु स्वस्वप्रपञ्चेषु नानाकार्यपरायणाः ॥ ११॥

तैः क्षिप्तं कार्यसिद्ध्यर्थं चित्तं कार्येषु नित्यदा ।
तत्तत्कार्यप्रकाशेन प्रकाशयति तान् हृदि ॥ १२॥

तेन कार्येषु दक्षास्ते भवन्त्यत्र न संशयः ।
तदेव क्षिप्तसंज्ञं त्वं चित्तं जानीहि मानद ॥ १३॥

केचित् स्वल्पज्ञकास्तेषु केचिज्ज्ञानाधिका मताः ।
मध्यमाः केचिदेवं तु नानाभेदाश्रिता नराः ॥ १४॥

त्रिविधेषु विभागेषु स्थिता नानाविभेदतः ।
नानाज्ञानयुतास्तेषां रूपं न कथितुं क्षमम् ॥ १५॥

लक्षचतुरशीतिषु जन्तवो विविधात्मकाः ।
व्यष्टिस्थाः सर्वकार्येषु ज्ञानहीना भवन्ति ये ॥ १६॥

ते मूढाः कथ्यते लोकैर्विषये चतुरैः सदा ।
तेषु नानाविधा भेदा अल्पाधिकसुमध्यमाः ॥ १७॥

तेषां प्रकाशकं चित्तं नानामूढस्वभावगम् ।
तदेव मूढसंज्ञाख्यं चित्तं ज्ञातव्यमञ्जसा ॥ १८॥

परैः सम्बोधितो जन्तुर्न बुबोध विचारतः ।
कार्यं नानाविधं तस्य चित्तं मूढं प्रकीर्तितम् ॥ १९॥

व्यष्टिस्था ये नरा दक्ष स्वधर्मनिरताः सदा ।
नानातपःपरा भूत्वा मुक्तिमिच्छन्ति शाश्वतीम् ॥ २०॥

विषयेषु विरज्यैव सदा ब्रह्मपरायणाः ।
कुर्वन्ति विविधं कर्माऽहर्निशं मुक्तिकारणात् ॥ २१॥

तदपि ब्रह्म हृदये न दृष्टं तैर्महात्मभिः ।
न संसारसुखे चित्तं तेषां रमति कर्हिचित् ॥ २२॥

अतो विक्षिप्तचित्तास्ते मता योगिजनैः पुरा ।
ब्रह्मार्पणक्रियाः सर्वाः कुर्वन्त्यन्तरबाह्यजाः ॥ २३॥

विशेषेणैव क्षिप्तोऽहं संसारे मायया सदा ।
विगतक्षेपणं सर्वे नानासाधनभावतः ॥ २४॥

तेषां मुक्त्यर्थमत्यन्तं प्रकाशयति भावनाम् ।
चित्तं क्रियात्मिकां तेन विक्षिप्तं तत्प्रकीर्तितम् ॥ २५॥

तत्र नानाक्रियायाश्च सामर्थ्येन विमोहितः ।
जानाति देवतां तुष्टां ममोपरि न संशयः ॥ २६॥

कदा देवप्रसादादि गृह्य विक्षेपसंयुतः ।
अनाधारां क्रियां कुर्योद्देवाज्ञावशगो मुधा ॥ २७॥

स्वप्नेषु विविधान् भावान् पश्यति तद्गतचेतसा ।
सत्यं स्वप्नं मदीयं तु मान्यं तादृशजं चरेत् ॥ २८॥

एवं विक्षिप्तभावेन मोहितः स कदाचन ।
अनाधारं करोत्येव नानातपःप्रभावतः ॥ २९॥

समष्टिव्यष्टिसंस्थं यच्चित्तं वैराटगं परम् ।
तेन व्यष्टिं समाव्याप्य भुङ्क्ते स विविधं सुखम् ॥ ३०॥

वैराटस्य क्रिया प्रोक्ता व्यापिका शास्त्रसम्मते ।
तत्र व्यापकभावस्य चित्तं प्रकाशदं मतम् ॥ ३१॥

तत्त्वेषु विविधेष्वेव स्थूलसूक्ष्मादिगेषु च ।
व्यापकभावकाशत्वाच्चित्तं तेषु स्थितं मतम् ॥ ३२॥

समष्टिव्यष्टिसंयोगेऽन्नं ब्रह्म स्थूलगं परम् ।
तथा स्वप्नगतं सूक्ष्मं सौषुप्तं समसंस्थितम् ॥ ३३॥

चेतनाभावगं पूर्णं तद्वन्नादात्मकं मतम् ।
अस्मिताख्यं परं ब्रह्म तेषु चित्तं प्रकीर्तितम् ॥ ३४॥

समष्टिव्यष्टिभागस्य तयोरैक्यस्य च प्रभो ।
प्रकाशकारकं विद्धि चित्तमेकाग्रसंज्ञितम् ॥ ३५॥

समष्टिव्यष्टिभावेषु न भिन्नं भवतीत्यहो ।
तेनैकाग्रं समाख्यातं चित्तं तज्ज्ञानकारकम् ॥ ३६॥

देहश्चतुर्विधः प्रोक्तः स्थूलः सूक्ष्मः समात्मकः ।
अस्मिताख्यश्चतुर्थश्च तेषु देही स्थितो मतः ॥ ३७॥

देहेषु मोहितो देही जीव इत्यभिधीयते ।
(Page खं. ९ अ. ५ पान १५)
मोहहीनः स एवाऽपि शिवः प्रोक्तो मनीषिभिः ॥ ३८॥

जीवशिवात्मिका संज्ञा देहिनो भ्रममात्रतः ।
सदैकात्मस्वभावत्वात्तत्र भेदो न विद्यते ॥ ३९॥

तत्र जीवशिवाकारभावप्रकाशकारकम् ।
चित्तमेकाग्रसंज्ञाख्यं तिष्ठति देहिसंश्रितम् ॥ ४०॥

सास्मिताच्च परं चित्तमेकाग्रं विद्यते न वै ।
देहदेहिमयं चित्तमेकाग्रं योगिनां मते ॥ ४१॥

चतुर्णां वपुषां यत्र ब्रह्माकारेण जायते ।
संयोगो बिन्दुरूपं तज्ज्ञातव्यं ब्रह्म सर्वगम् ॥ ४२॥

चतुष्पदं बुधैः प्रोक्तं चतुर्भिर्वर्जितं सदा ।
देहानां ब्रह्म विख्यातं नानादेहस्वभावगम् ॥ ४३॥

तत्र चतुष्पदाकारभावप्रकाशकारकम् ।
चतुर्भिर्वर्जितस्यैव चित्तं तिष्ठति तद्गतम् ॥ ४४॥

देहेषु न भवेद्भिन्नं सर्वगमात्मभावतः ।
निरोधं कथ्यते चित्तं बिन्दुधर्मप्रकाशकम् ॥ ४५॥

जीवशिवात्मभावस्थं मोहहीनं सदात्मगम् ।
ब्रह्म सोऽहं समाख्यातं सदा भ्रान्तिविवर्जितम् ॥ ४६॥

तत्र जीवशिवाकारमोहहीनप्रकाशकम् ।
चित्तमात्मस्वरूपस्थं निरोधं कथ्यते बुधैः ॥ ४७॥

देहदेहिसमायोगे स्वत उत्थानमुच्यते ।
बोधाख्यं द्वन्द्वभावेन ब्रह्म खेलकरं सदा ॥ ४८॥

तत्र निरोधकं चित्तं तस्य रूपं वदाम्यहम् ।
सङ्क्षेपेण प्रजानाथ शृणु भावसमन्वितः ॥ ४९॥

बाह्यं स्थूलं समाख्यातमान्तरं सूक्ष्मगं मतम् ।
बाह्यान्तरैकभावस्थमानन्ददेहगं परम् ॥ ५० ॥

त्रिभिर्हीनं त्रयाणां च चालकं ह्यस्मितात्मकम् ।
अहमानुभवेनैतज्ज्ञातव्यं योगिनां हृदि ॥ ५१ ॥

तेषां संयोगभावे यच्चतुर्णां वपुषां परम् ।
सर्वात्मकं भवेद्ब्रह्म पञ्चमं बिन्दुसंज्ञितम् ॥ ५२ ॥

चतुर्विधा नरस्यैव कल्पना हृदि संस्थिता ।
अतः परं न भेदोऽस्ति भवेद्येनास्य कल्पना ॥ ५३ ॥

बिन्दुत्यागे निरालम्बं चित्तं भवति सर्वदा ।
सततं तत् समाख्यातं ब्रह्म ध्यातृविहीनतः ॥ ५४ ॥

न किञ्चिज्ज्ञायते यत्र भेदहीनप्रभावतः ।
सोहं मात्रात्मकं चित्तं निरालम्बसमाधिदम् ॥ ५५ ॥

अवलम्बनगं चित्तं चतुर्धा देहिसंश्रितम् ।
अवलम्बनहीनं तद्देहिगं चिन्मयं भवेत् ॥ ५६ ॥

निरालम्बपरित्यागेऽधिकसंरोधनं भवेत् ।
चित्तस्य देहदेहिभ्यां हीनत्वान्नात्र संशयः ॥ ५७ ॥

मनोवाणीविहीनं तच्चित्तं ज्ञातव्यमादरात् ।
अस्तिनास्तिविहीनत्वादाधाराधेययोगतः ॥ ५८ ॥

अवलम्बनयोगो न पञ्चधा योगिनां हृदि ।
निरालम्बनकं तस्मान् मनोवाणीविवर्जितम् ॥ ५९ ॥

बोधेन बुध्यते सर्वं निरालम्बं समाधिना ।
अवलम्बनकं तद्वद्बोधबोधो न विद्यते ॥ ६० ॥

एवं बोधात्मकं ब्रह्म देहदेहिसमाधिदम् ।
देहदेहिसमायोगप्रकाशं चित्तमुच्यते ॥ ६१ ॥

देहसौख्यं प्रजानाति देहिसौख्यं निरन्तरम् ।
तयोर्योगे च यत् सौख्यं जानाति ब्रह्म बोधगम् ॥ ६२ ॥

पदानां बोधभावेन पदार्थानां विशेषतः ।
उत्थानं जायते तस्मात् स्वत उत्थानमुच्यते ॥ ६३ ॥

सुखं ज्ञात्वा समुत्थानं स्वयमेव करोति यः ।
देहदेहि च सृष्ट्वा स खेलति ब्रह्मतत्परः ॥ ६४॥

तत्रोत्थानप्रकाशाख्यं चित्तं निरोधसंज्ञकम् ।
तिष्ठत्यत्र न सन्देहो ज्ञातव्यं योगिनां हृदि ॥ ६५॥

(Page खं. ९ अ. ५ पान १६)
बोधत्यागे समाख्यातं ब्रह्म साङ्ख्यं प्रजापते ।
कः सङ्ख्यां कुरुते तस्य बोधनाशप्रभावतः ॥ ६६॥

उत्थानवर्जितं ब्रह्म साङ्ख्यं साक्षिस्वभावगम् ।
बोधहीनात् कदा तत्रोत्थानं नैव प्रजापते ॥ ६७॥

प्रकृतिसम्भवं बोधं तयोः पुरुषसम्भवम् ।
योगसौख्यं न जानाति साङ्ख्यं बोधविहीनतः ॥ ६८॥

बुद्ध्वा सुखं नरस्यैवोत्थानं यथा प्रजापते ।
तथा मायासुखं ज्ञात्वा ब्रह्मणोत्थानकं भवेत् ॥ ६९॥

तथा परत उत्थानं साङ्ख्ये नित्यं प्रतिष्ठितम् ।
तत्र योगं प्रवक्ष्यामि येन योगी नरो भवेत् ॥ ७०॥

यद्युत्थानसमायुक्तं भवति चेत्तदा भवेत् ।
उत्थानवर्जितं दक्ष तदेवं बीजमाद्यकम् ॥ ७१॥

उत्थानहीनभावेन सदा साङ्ख्यं विराजति ।
स्वयं च स्वत उत्थानं निःसृतं तत् प्रभावतः ॥ ७२॥

साङ्ख्येन न कृतं चैतत्तथाप्युत्थानहीनतः ।
स्वयं च स्वत उत्थानं जायते नात्र संशयः ॥ ७३॥

यदाऽनृतं भवेद्दक्ष तदा सत्यं प्रकीर्त्यते ।
एकं ब्रह्म यदा तिष्ठेत् सत्यं तत् केन कथ्यते ॥ ७४॥

न दृष्टमनृतं येन न जानाति स सत्यकम् ।
सदा तादृशरूपत्वादेकभावप्रदर्शनात् ॥ ७५॥

अत उत्थानहीनत्वं धृतं तेन विशेषतः ।
स्वत उत्थानभावाख्यं स्वयमेवोपजायते ॥ ७६॥

न कृतं तेन साङ्ख्येन स्वयमेव विनिःसृतम् ।
अतः परत उत्थानं प्राप्तं तत्र न संशयः ॥ ७७॥

सङ्ख्याहीनप्रकाशाख्यं चित्तं तत्र प्रवर्तते ।
बोधहीनप्रकाशेन ज्ञायते तन्निरोधकम् ॥ ७८॥

उत्थानेन युतं ब्रह्म बोधमयं प्रकीर्तितम् ।
साङ्ख्यमुत्थानहीनं च तयोर्योगे निजात्मकम् ॥ ७९॥

स्वतः परत उत्थानं तत्र नैव प्रजापते ।
जगतां ब्रह्मणां योगे भवति स्वस्वरूपकम् ॥ ८०॥

स्वस्वरूपात् परो नास्ति संयोगः तन्मयः कदा ।
स समाधिः समाख्यातो ब्रह्मण्यस्यान्वयात्मकः ॥ ८१॥

स्वकीयाभेदभावस्य तत्र प्रकाशकारकम् ।
चित्तं निरोधसंज्ञं तु तिष्ठत्यत्र न संशयः ॥ ८२॥

संयोगः पञ्चधा दक्ष भवति शृणु रूपकम् ।
तस्य भिन्नं प्रवक्ष्यामि लोकानां हितकारणात् ॥ ८३॥

एते भेदाः समाख्याता योगेन लयतां ययुः ।
स्वसंवेद्येन सन्देहस्तेन सृष्टाश्च पालिताः ॥ ८४॥

एतेषां रूपमास्थाय खेलति स्वस्वरूपकम् ।
नानालीलाकरं प्रोक्तं तदेवं वेदवादिभिः ॥ ८५॥

उत्पत्तिनाशसंयुक्ता भेदा एते मनीषिभिः ।
तेषां निजस्वभावत्वादसत्स्वानन्द उच्यते ॥ ८६॥

तद्ब्रह्म शक्तिरूपाख्यं ज्ञातव्यं भेदधारणात् ।
तत्रासत्काशभावेन चित्तं तिष्ठति निश्चितम् ॥ ८७॥

एतैर्भेदैर्विहीनं यदमृतं ब्रह्म कथ्यते ।
एतेषां जीवनं नित्यं तच्च सत्स्वस्वरूपकम् ॥ ८८॥

तद्ब्रह्म सौरमाख्यातं भेदहीनप्रभावतः ।
तत्र नित्यस्य काशाख्यं चित्तं निरोधकं मतम् ॥ ८९॥

(Page खं. ९ अ. ५ पान १७)

असत् सत् द्विविधं प्रोक्तं तयोर्योगे समात्मकम् ।

स्वसंवेद्यं परं ब्रह्म विष्णुर्द्वन्द्वप्रवेशनात् ॥ ९०॥

तत्रानन्दप्रकाशाख्यं चित्तं निरोधसंज्ञितम् ।
तिष्ठते तेन योगीन्द्रास्तं गच्छन्ति समाधिना ॥ ९१॥

त्रिभिर्हीनं त्रिभिर्युक्तमव्यक्तं नेति कारकम् ।
मोहहीनप्रभावेण तुरीयं ब्रह्म कथ्यते ॥ ९२॥

तदेव शिवसंज्ञाख्यं ज्ञातव्यं योगसेवया ।
तत्र नेति प्रकाशाख्यं चित्तं तिष्ठति तद्गतम् ॥ ९३॥

त्रिविधं मोहसंयुक्तं मोहहीनं चतुर्थकम् ।
तेषां संयोगभावे वै स्वसंवेद्यं प्रकीर्तितम् ॥ ९४॥

पूर्णसंयोगभावाख्यं पञ्चमं ब्रह्म तत् स्मृतम् ।
तस्मात् परो न संयोगः कथ्यते योगिभिः सदा ॥ ९५॥

स एव गणनाथस्तु स्वानन्दाख्यः प्रकीर्तितः ।
तत्र निजप्रकाशाख्यं चित्तं तिष्ठति सर्वगम् ॥ ९६॥

अतः परमयोगाख्यं ब्रह्म मायाविवर्जितम् ।
तदेव योगिभिः प्रोक्तं निवृत्तिसुखदायकम् ॥ ९७॥

न तत्र जगतां दक्ष ब्रह्मणां योग उच्यते ।
तस्याऽपि तेषु तद्वच्च तेनायोग इति स्मृतः ॥ ९८॥

ब्रह्मणि तन्मयत्वेन स्वस्य संयोग उच्यते ।
तस्मान्निवृत्तिरापन्ना तेन निवृत्तिसंज्ञकम् ॥ ९९॥

स्वसंवेद्यस्य नाशेन लभ्यते ह्यसमाधिना ।
नाऽगतं न गतं ब्रह्म संयोगः कुत्र जायते ॥ १००॥

तत्रायोगप्रकाशाख्यं चित्तं निरोधसंज्ञितम् ।
तिष्ठति चापवादेषु निवृत्तिसुखदायकम् ॥ १०१॥

इदं पञ्चविधं चित्तं कथितं ते प्रजापते ।
जगत्सु ब्रह्मसु तज्ज्ञं नानाप्रकाशदायकम् ॥ १०२॥

भूमयः पञ्च विख्याताश्चित्तस्य विविधात्मनः ।
भूमीनां त्यागभावे तच्चित्तं ब्रह्ममयं भवेत् ॥ १०३॥

अतः पञ्चविधं चित्तं त्यज त्वं योगसेवया ।
योगी भविष्यसि दक्ष चिन्तामणौ न संशयः ॥ १०४॥

संयोगायोगसंज्ञस्थं निरोधाख्यं मतं बुधैः ।
अतः परो निरोधो न विद्यते सर्वसम्मते ॥ १०५॥

सार्वभौमात्मधर्मेण योगी भवति मानवः ।
तत्र शान्तिं लभेच्चित्तं त्यक्त्वा भूमिभवं भ्रमम् ॥ १०६॥

योगरूपे सुखं यद्वै योगिनां हृदि वर्तते ।
तदेव कथितुं दक्ष शक्यते न कदाचन ॥ १०७॥

मनोवाणीमयं चित्तं चतुर्विधं प्रकीर्तितम् ।
मनोवाणीविहीनं तु निरोधसंज्ञकं मतम् ॥ १०८॥

अतो योगः समाख्यातो मनोवाणीमयो न च ।
मनोवाणीविहीनोऽपि कथ्यते नैव योगिभिः ॥ १०९॥

कीदृशं ब्रह्म तत्राहं योगेन कीदृशेन च ।
ब्रह्मभूतः स्वयं जात एभ्यः शान्तिं लभेन्नरः ॥ ११०॥

योगे योगी नरो जातस्तत्र न ज्ञायते कदा ।
ब्रह्म वा साधनं किञ्चिद्ब्रह्मभूतस्य कारकम् ॥ १११॥

तन्मयत्वं ब्रह्मणि न न च तन्मयवर्जनम् ।
अतः शान्तिं समागृह्य शान्तियोगपरो भवेत् ॥ ११२॥

पञ्चविधेषु चित्तेषु दृश्यते जगतां परम् ।
ब्रह्मणामैश्वरं सौख्यं रसं तत्र न धारयेत् ॥ ११३॥

नानारसविहीनं तु चित्तं कृत्वा प्रजापते ।
तत्त्यक्त्वा स भवेद्योगी शान्त्या शान्तिमवाप्नुयात् ॥ ११४॥

(Page खं. ९ अ. ६ पान १८)
स्रोतसोर्णवमानन्दाद्गच्छन्त्यप्रेरितान्यपि ।
प्रारब्धेन तथा कामान् भुनक्ति योगिसत्तमः ॥ ११५॥

नानाद्वन्द्वविहारेषु समभावपरायणः ।
योगी भवति शान्त्या च सदा योगसुखे रतः ॥ ११६॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे

नवमे खण्डे योगचरिते मुद्गलदक्षसंवादे योगामृतार्थशास्त्रे
चित्तभूमिनिरोधेन सार्वभौमयोगो नाम पञ्चमोऽध्यायः ॥ ९.५
॥ इति योगगीतासूपनिषत्सु सुगमासु प्रथमोऽध्यायः ॥ ९(दत्तगीता).१

## ९.६ योगिचित्तानुभवशान्तिसुखवर्णनयोगो नाम षष्ठोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
योगस्यानुभवं ब्रूहि यत्र शान्तिं लभेन् मनः ।
रसं त्यक्त्वा सुशान्त्या तद्युक्तं तिष्ठेन् महामुने ॥ १॥

मुद्गल उवाच ।
न तत्र दृश्यते दक्ष जगद्ब्रह्मभवं सुखम् ।
तन्मायामयगं दृष्ट्वा तस्मान्निर्वृत्तिगो भवत् ॥ २॥

नाहं देहो न मे देहो नाहं नानाभ्रमान्वितः ।
चराचरमयो नैव ताभ्यां संवर्जितो न च ॥ ३॥

न समष्टिसमायुक्तो व्यष्टिगो न कदाचन ।
ब्रह्माऽहमखिलेष्वेव तत्तद्भावविवर्जितः ॥ ४॥

न बाह्यसुखभोक्ताऽहं नान्तरस्थपरायणः ।
न समानगतोऽहं तु नात्मप्रतीतिधारकः ॥ ५॥

न स्थूलो नैव सूक्ष्मोऽहं नानन्दगः कदाचन ।
न नाददेहसंस्थश्च सर्वाकारः सदा मतः ॥ ६॥

चतुष्पादाः सन्ति मे चेन् मायया सन्धृता मया ।
मायाहीनप्रभावेण पादहीनोऽहमञ्जसा ॥ ७॥

मायायुक्तवियुक्तत्वं मयि नैव प्रतिष्ठितम् ।
मायासंस्थापितं द्वन्द्वं तदप्याश्चर्यमुत्तमम् ॥ ८॥

अनेनानुभवेनैव योगी बिन्दुगतो भवेत् ।
तत्र लीनस्वभावेन सदा शान्त्या प्रवर्तते ॥ ९॥

अथाहं भेदहीनश्च न भेदो मयि वर्तते ।
सदा सन्ततभावेन संस्थितोऽत्र निरन्तरम् ॥ १०॥

न सृजामि हराम्येव पालयामि न निश्चितम् ।
स्वयमेव जगद्भाति यथा मयि धृतं भवेत् ॥ ११॥

उत्पन्नं स्वस्वभावेन स्मितं नष्टं तथा किल ।
विश्वं तत्र न मे हानिर्वृद्धिर्भवति कर्हिचित् ॥ १२॥

न विश्वस्मिन्नहं जीवो न शिवः साक्षिभावगः ।
भ्रान्त्या मायायुतं हीनं वदन्त्ययोगिनः सदा ॥ १३॥

यथाऽऽकाशभवं मेघपटलं सर्वतः स्थितम् ।
तत्र सूर्यस्य किं दक्षाच्छादनं सम्भवेत् कदा ॥ १४॥

नष्टेऽभ्रे किं रविः साक्षाच्छादनेन विवर्जितः ।
तथा मोहविमोहौ च मयि भ्रान्त्या वदन्ति ये ॥ १५॥

(Page खं. ९ अ. ६ पान १९)
सदैकात्मस्वरूपाख्ये मयि मोहविमोहकौ ।
कथं भेदौ प्रवर्तेते पश्य मायाप्रभावजौ ॥ १६॥

तथापि विश्वसंयुक्तो मोहितोहं न संशयः ।
ज्ञात्वाऽऽत्मानं विमोहोऽहं सदा साक्षी न संशयः ॥ १७॥

मायया जीवसंज्ञोऽहं तथा शिवो न संशयः ।
मयि ब्रह्मणि विश्वं तत् दृश्यते नैव दृश्यते ॥ १८॥

एवं ज्ञात्वा स्वयं योगी सदा शान्त्या प्रवर्तते ।
द्वन्द्वभावं परित्यज्य सोऽहं ब्रह्मणि संस्थितः ॥ १९॥

अतः परं प्रवक्ष्यामि ब्रह्मानुभवरूपकम् ।
न देहो नैव देहस्थोऽहं भवामि कदाचन ॥ २०॥

सन्ततं मयि नास्त्येव विश्वं मयि न विद्यते ।
भेदाभेदविहीनत्वाद्ब्रह्म ब्रह्मण्यहं रतः ॥ २१॥

विश्वरूपोऽहमेवेदं मयि सर्वं प्रतिष्ठितम् ।
विश्वहीनो न सन्देहः सदैकरूपधारकः ॥ २२॥

न सृष्टं पाल्यते नैव ह्रियते न मया कदा ।
विश्वं सृष्टं हृतं नित्यं पालितं सर्वदा मया ॥ २३॥

मयि सन्ततभावश्च दृश्यते न विनिश्चितम् ।

न विश्वं विविधाकारं नानादेहपरायणम् ॥ २४॥

सदा बोधमयोऽहं तु देहदेहियुतस्तथा ।
मम तत्र न भो दक्ष बन्धाऽबन्धौ प्रकीर्तितौ ॥ २५॥

मायया संयुतो नित्यं देहदेहिमयो मतः ।
मायाहीनप्रभावेण देहदेहिविवर्जितः ॥ २६॥

मायायुक्तवियुक्तत्वं मयि कुत्र प्रदृश्यते ।
सदाऽहं बोधरूपाख्यो ब्रह्मणि ब्रह्मभावितः ॥ २७॥

एवं बोधात्मकेनैवानुभवेन प्रजापते ।
योगी योगसमायुक्तः सदा शान्त्या प्रवर्तते ॥ २८॥

अतः परं विबोधाख्यं वक्ष्यामि ब्रह्मभूतकम् ।
प्रकृतिर्न तथा दक्ष पुरुषोऽहं न निश्चितम् ॥ २९॥

तयोर्योगेन बोधोऽहं ब्रह्माऽहं भोगवर्जितः ।
सदा ब्रह्मणि संस्थश्च खेलहीनप्रभावतः ॥ ३०॥

मिथ्यारूपं जगत् सर्वं जगदात्मा तथा मतः ।
तयोर्योगकरं ब्रह्म मिथ्यामूलप्रकाशकम् ॥ ३१॥

मयि ब्रह्मणि नास्त्येव प्रकृतिर्वा पुमान् क्वचित् ।
तयोर्योगो भ्रमाकारः सदा खेलपरायणः ॥ ३२॥

बोधेनोत्थानभावश्च जायते ब्रह्मणः सदा ।
मिथ्याभूतं तदेवाऽपि कथं मयि प्रवर्तते ॥ ३३॥

सत्यं ब्रह्म इति प्रोक्तं वेदेषु वेदवादिभिः ।
तत्र खेलोऽनृताकारः कुतस्तिष्ठति भ्रान्तिदः ॥ ३४॥

सदा ब्रह्मसुखे सक्तो ब्रह्मणि ब्रह्मभावितः ।
तत्र भेदादिकं नास्ति स्त्रीपुम्भावमयं कदा ॥ ३५॥

मायया रचितं सर्वमनृताख्यं न संशयः ।
सा मयि न स्थिता दक्ष निराधारा भ्रमान्विता ॥ ३६॥

ब्रह्मरूपं च मां दृष्ट्वा स्वयमेव विनश्यति ।
माया ततः स्वयं साक्षात् सत्यरूपो भविष्यति ॥ ३७॥

यद्यहं मायया युक्तस्तया स्त्रीपुम्मयं जगत् ।
सृजामि चेत्तदा सत्यं मयि कुतः प्रतिष्ठति ॥ ३८॥

यत्रानृतस्वरूपं तु नास्त्येव वेदवादतः ।
तदेव सत्यमाख्यातमतो बोधो न दृश्यते ॥ ३९॥

अनृतं विश्वमखिलं प्रकृतिपुरुषात्मकम् ।
तस्माद्भिन्नोऽहमेकश्च सत्यरूपो न संशयः ॥ ४०॥

योगेनैतादृशेनैव शान्तियुक्तो भवेन्नरः ।
सङ्ख्यां त्यक्त्वा स विविधां ब्रह्मभूतस्वभावतः ॥ ४१॥

अथ स्वानन्दयोगं तु वदिष्यामि हिताय ते ।
तं शृणुष्व प्रजानाथ सावधानेन चेतसा ॥ ४२॥

सत्यमुत्थानहीनं चानृतमुत्थानसंयुतम् ।
ब्रह्मणि द्विविधं नास्ति स्वस्वरूपिणि नित्यदा ॥ ४३॥

बोधयुक्तं स्वतोत्थानं साङ्ख्यमुत्थानवर्जितम् ।
तयोर्योगे परं ब्रह्माऽसत्स्वानन्दमयं भवेत् ॥ ४४॥

उत्थानवर्जितोऽहं नोत्थानयुक्तोऽपि नाञ्जसा ।
उत्थानयुक्तहीनोऽहं पश्य मे योगमुत्तमम् ॥ ४५॥

मयि ब्रह्मणि सर्वं तत् स्वस्वरूपमयं भवेत् ।
तत्रोत्थानेन युक्तत्वं हीनत्वं नैव दृश्यते ॥ ४६॥

अहो मायाप्रभावेण मां वदन्ति विमोहिताः ।
उत्थानेन युतं हीनं स्वस्वरूपं निजे रतम् ॥ ४७॥

उत्थानसंयुतं ब्रह्मोत्थानहीनं प्रकीर्तितम् ।
ब्रह्मणि तन्मयं सर्वं संयोगायोगभावतः ॥ ४८॥

मयि ब्रह्मणि संयोगो जायते योगिनां यदा ।
उत्थानेन युतं हीनं कः पश्यति ततः परम् ॥ ४९॥

समाधिहीनभावेन पश्यन्ति विविधं सदा ।
अयोगिनो न सन्देहो योगिनां वै न विद्यते ॥ ५०॥

सर्वं ब्रह्मेति वेदेषु कथ्यते वेदवादिभिः ।
अतो मायां परित्यज्य ब्रह्माकारो भवेन्नरः ॥ ५१॥

अनेन विधिना योगं साधयेद्यः समाधिना ।
ब्रह्मणि ब्रह्मभूतः स शान्तिं प्राप्नोति शाश्वतीम् ॥ ५२॥

अथ सत्स्वस्वरूपस्य विधेर्योगं वदामि भोः ।
तं ज्ञात्वा योगमार्गेण योगी भवति मानवः ॥ ५३॥

सर्वं ब्रह्मेति वेदेषु कथितं नात्र संशयः ।
तदेवोपाधिसंयुक्तं सर्वं मायाप्रभावतः ॥ ५४॥

एकमेवाद्वितीयं यद्ब्रह्म वेदविवादतः ।
तत्र सर्वं कुतो भाति नानाभावपरायणम् ॥ ५५॥

नाहमुत्थानसंयुक्तो नाहमुत्थानवर्जितः ।
तयोर्योगमयोऽहं नाद्वितीयेऽस्मिन् स्थितः सदा ॥ ५६॥

न सत्यं मयि नास्त्येवानृतं तत् संयुतं परम् ।
ब्रह्म संयोगदं नास्ति सदाऽहं ब्रह्मसंज्ञकः ॥ ५७॥

न मया सत्यरूपं तु सृष्टं नानृतरूपकम् ।
तयोर्योगमयं नैवामृतोऽहं चात्मभावतः ॥ ५८॥

आदिमध्यान्तभावाश्च कुतो मयि भवन्ति ते ।
सदामृतमये संस्थोऽहमात्मा ब्रह्मभावितः ॥ ५९॥

मायया संयुताः सर्वे सर्वेषां जीवनं परम् ।
मां वदन्ति विशेषेण मयि सर्वं न विद्यते ॥ ६०॥

सर्वात्मकं परं ब्रह्म नानाखेलयुतं भवेत् ।
खेलहीनं भवति च तदेवापि तयोः परम् ॥ ६१॥

तत्राहं नागतो दक्ष न गतोऽपि कदाचन ।
स्वयमेव भवेत् पश्य जीवनं मे प्रभावतः ॥ ६२॥

तत्र किं मयि सर्वात्मविकारो दृश्यते कदा ।
भ्रान्तियुक्ता मां वदन्ति जीवनं ब्रह्मणां परम् ॥ ६३॥

ब्रह्मणां जगतां नैव जीवनं सन्धृतं मया ।
स्वयमेव प्रभावेण मयि तत् दृश्यते वृथा ॥ ६४॥

सदा ब्रह्मणि संस्थोऽहं भेदाभेदादिवर्जितः ।

अद्वितीयप्रभावेणात्माऽहं पूर्णस्वभावतः ॥ ६५॥

अनेन योगमुख्येन योगी सञ्जायते नरः ।
ब्रह्मणिब्रह्मभूतत्वाच्छान्तियुक्तो भवेत् सदा ॥ ६६॥

अतः परं समाख्यं यद्ब्रह्मानुभवरूपकम् ।
(Page खं. ९ अ. ६ पान २१)
कथयामि महाप्रीत्या येन योगी भवेन्नरः ॥ ६७॥

नाहं सर्वात्मको दक्ष नाहमात्मात्मकः कदा ।
आनन्दोऽहं तयोः साम्ये ब्रह्मणि ब्रह्मभावतः ॥ ६८॥

मया मायाबलेनैव सर्वात्मकं प्रतिष्ठितम् ।
एकमेवाद्वितीयाख्यं तयोः साम्येऽहमास्थितः ॥ ६९॥

ब्रह्मणि सर्वभावश्च भावहीनं कुतो भवेत् ।
अमृतं मृतमूलं यन्नास्त्येव मयि सर्वदा ॥ ७०॥

अनन्तलीलया युक्तं लीलाहीनं न विद्यते ।
मयि लीलायुतं हीनं वर्तते पश्य मे महः ॥ ७१॥

अखण्डरूपभावेन संस्थितोऽहं सदाऽमलः ।
नानाविकारहीनत्वाद् द्वाभ्यां हीनोऽहमञ्जसा ॥ ७२॥

ब्रह्मणि सर्वभावश्च वर्तते नात्र संशयः ।
सदात्मभावस्तत्रैव साम्यं वेदे ततः स्मृतम् ॥ ७३॥

यद्यत् सङ्कथ्यते वेदे तेषु ब्रह्म स्थितं मतम् ।
न वर्ण्यते तथा तत्र न तद्ब्रह्ममयं किल ॥ ७४॥

अतः समं समाख्यातं ब्रह्म वेदविवादतः ।
आनन्दमुभयानन्दादासमन्ताद्विचारय ॥ ७५॥

आनन्दोऽहं न सन्देहो ब्रह्म ब्रह्मसु संस्थितम् ।
अनेनानुभवेनैव शान्तियुक्तो नरो भवेत् ॥ ७६॥

अतस्ते व्यक्तसंज्ञस्थं कथयामि प्रजापते ।
ब्रह्मानुभवमाहात्म्यं येन योगी भवेन्नरः ॥ ७७॥

अहमव्यक्तरूपश्च त्रिभिर्हीनः सदा मतः ।
त्रिषु मोहविहीनोऽहं त्रिनेतिकारकः परः ॥ ७८॥

सर्वात्मकं मयि नास्ति तथाऽमृतमयं न च ।
साम्यं स्वाधीनसंज्ञेऽथ ब्रह्मणि नन्दनात्मकम् ॥ ७९॥

उत्थानयुक्तहीनाख्यो मोहः सर्वमये स्थितः ।
सदाऽमृतमयो मोहोऽखण्डब्रह्मणि कथ्यते ॥ ८०॥

नन्दनं सर्वभावेषु समत्वान्मोहरूपकम् ।
सदा स्वाधीनता तेषु कुतस्त्रिषु भवेत् किल ॥ ८१॥

त्रिभिर्युक्तोऽहमत्यन्तं तदपि त्रिविमोहतः ।
भिन्नः सदा त्रयाणां तु नेति कर्ताहऽमञ्जसा ॥ ८२॥

नानाभावसमायुक्तं भावहीनं ततः परम् ।
साम्यमुभयगं तेभ्यः परोऽव्यक्तस्ततः स्मृतः ॥ ८३॥

सृष्ट्वाऽहं त्रिविधां मायां तत्र खेलकरो मुदा ।
मोहहीनोऽहं तदपि मायायाः स्वप्रभावतः ॥ ८४॥

मदाज्ञया त्रयं नित्यं चलत्यत्र न संशयः ।
स्वस्वव्यापारसंयुक्तं स्वाधीनोऽहं प्रभावतः ॥ ८५॥

त्रयाणामन्तरे प्रज्ञस्तिष्ठाम्यत्र न संशयः ।
ममान्तरे कोऽपि न वै प्रेरकः साधुसत्तम ॥ ८६॥

स्वस्वभावेषु नित्यं तु प्रेरकस्त्रिषु संस्थितः ।
तथापि नैव मे मोहो नाहं प्रेरक उच्यते ॥ ८७॥

अहमव्यक्तरूपश्च वेदे सङ्कथितो मतः ।
नेह नानास्तिभावाख्यः सदा नानात्रिवर्जितः ॥ ८८॥

नेह नानाप्रमाणेनाऽव्यक्तं ब्रह्म सनातनम् ।
तदेवाहं सुखे सक्तः सदा ब्रह्मणि योगतः ॥ ८९॥

सर्वेषां नेति कर्ताऽहं महादण्डधरः प्रभुः ।
नेति कर्ता नास्ति मे कस्तेनाव्यक्तोऽहमञ्जसा ॥ ९०॥

मनोवाणीविहीनोऽहमव्यक्तः परमो मतः ।
अनेनानुभवेनैव शान्तिं प्राप्नोति मानवः ॥ ९१॥

अथ पूर्णनिजानन्दानुभवं शृणु सौख्यदम् ।

येन स्वानन्दसंयुक्तो भविष्यसि महामते ॥ ९२॥

अहं ब्रह्ममयः साक्षान् मयि मोहविवर्जितम् ।
(Page खं. ९ अ. ६ पान २२)
कुतो मोहयुतं ब्रह्म निजरूपे भवेत् कदा ॥ ९३॥

महावाक्ययुता वेदा यदा लीनाः समाधिना ।
तदा स्वानन्दगाः प्रोक्ताः पश्य वेदे महात्मभिः ॥ ९४॥

अहम्भावयुतो जन्तुर्मायया तुर्यभावया ।
मोहहीनश्च युक्तश्च भवति भ्रमभावतः ॥ ९५॥

चतुर्विधं मया सृष्टं नानाभावपरायणम् ।
भावहीनं समानं चाव्ययं तेषु स्थितेन वै ॥ ९६॥

ब्रह्मदोषविहीनं तु दोषयुक्तं प्रकीर्तितम् ।
साम्यं नेतिमयं वेदे चतुर्हीनपरं भवेत् ॥ ९७॥

स्वानन्दे तन्मयो योगी भवते यः समाधिना ।
न पश्यति पुनर्ह्यत्र चतुर्षु मोहितात्मसु ॥ ९८॥

समाधिना युतो योगी निजरूपे लयं गतः ।
न पुनर्दर्शनं तस्य तेषां तत्र प्रवर्तते ॥ ९९॥

कीदृशोऽहमिमां मायां यस्त्यक्त्वा योगसंयुतः ।
ब्रह्मणि ब्रह्मभूतः स भवति स्वस्वरूपिणि ॥ १००॥

यदा ब्रह्मणि योगेन तन्मयो भवति स्वयम् ।
स्वपरादिकमेवेदं पुनर्वद कुतः प्रभो ॥ १०१॥

अहं ब्रह्मेति यत् प्रोक्तं पश्य वेदे विचारतः ।
तेनैव कृतकृत्यः स भवति योगसेवया ॥ १०२॥

एवं संयोगयोगेन भवेत् ब्रह्मणि तन्मयः ।
शान्तियुक्तः स वै साक्षात् वर्तते शान्तिधारकः ॥ १०३॥

अतः परमयोगाख्यं वदामि योगमुत्तमम् ।
तत्रानुभवमात्रेण शान्तियुक्तो नरो भवेत् ॥ १०४॥

अहं ब्रह्मेति यत् प्रोक्तं कुतस्तत्र भवेदिदम् ।
तन्मयत्वं प्रजानाथ ब्रह्म ब्रह्मणि संस्थितम् ॥ १०५॥

ब्रह्म वाणीविहीनं च मनोगतिविवर्जितम् ।
तदेव नागतं कुत्र न ब्रह्मणि गतं पुनः ॥ १०६॥

यदा भिन्नं विहारेषु संसक्तं जायते परम् ।
तदा योगेन स्वानन्दयुक्तं भवति नान्यथा ॥ १०७॥

ब्रह्म ब्रह्मणि संस्थं च नागतं न गतं मतम् ।
कुतो योगेन तत्रैव तन्मयो जायते नरः ॥ १०८॥

सदाऽहं ब्रह्मरूपश्च न मायासंयुतः कदा ।
भ्रान्त्या मां नैव जानन्ति स्वमहिम्नि स्थितं परम् ॥ १०९॥

सर्वसंयोगयोगाख्या माया नानाभ्रमात्मिका ।
मयि ब्रह्मणि सा कुत्र तिष्ठति ब्रह्मवर्जिता ॥ ११०॥

यथा मरीचिसंस्थं च तोयं व्यर्थभ्रमप्रदम् ।
तथा मयि महामाया व्यर्था संयोगधारिका ॥ १११॥

ब्रह्मदोषविहीनं तु वेद सङ्कथितं पुरा ।
तदेव मायया युक्तं कथं भवति मोहितम् ॥ ११२॥

भ्रान्तियुक्तं सुयोगेन भ्रान्तिहीनं भवेत् कथम् ।
ब्रह्ममायायुता मूर्खो वदन्ति ब्रह्मवर्जिताः ॥ ११३॥

अतोऽहं नागतः पश्य जगत्सु ब्रह्मसु प्रभुः ।
न ब्रह्मणि गतस्तत्र पुनर्योगस्य सेवया ॥ ११४॥

ब्रह्मणि विविधाकारा माया नैव प्रतिष्ठति ।
मायायां नैव तद्ब्रह्म ह्यपवादप्रभावतः ॥ ११५॥

अयोगस्त्रिविधः प्रोक्तो मृदुमध्याधिमात्रतः ।
तेषां भेदं प्रवक्ष्यामि मायामूलनिकृन्तनम् ॥ ११६॥

स्वतोत्थानभ्रमं त्यक्त्वाऽहं ब्रह्म ह्यपवादतः ।
यस्तिष्ठति नरः सोऽपि मृदुयोगयुतो मतः ॥ ११७॥

परतोत्थानजं दक्ष भ्रमं त्यक्त्वा ह्ययोगतः ।
तिष्ठति मध्यगः सोऽपि मतो योगस्य सेवया ॥ ११८॥

(Page खं. ९ अ. ६ पान २३)

स्वतः परत उत्थानहीनं संयोगधारकम् ।
ब्रह्म तस्य भ्रमं त्यक्त्वा तिष्ठति सोऽधिमात्रगः ॥ ११९॥

नाऽऽगतोऽहं यदा भ्रान्त्या जगत्सु ब्रह्मसु भ्रमन् ।
तदा मे गमनं कुत्र योगेनैव भविष्यति ॥ १२०॥

ब्रह्मभूतस्वभावेन स तिष्ठति नरोत्तमः ।
निवृत्तियोगमाश्रित्य सदा शान्त्या प्रवर्तते ॥ १२१॥

अधुना पूर्णयोगस्यानुभवं ते वदाम्यहम् ।
योगी येन नरो भूत्वा तिष्ठति गणपप्रियः ॥ १२२॥

नाहं न ब्रह्म वेदेषु कथितं भेदभ्रान्तिदम् ।
ब्रह्मणि द्विविधं दक्ष कुतो भवति चित्तगम् ॥ १२३॥

अहं चित्तमयश्चैव ब्रह्म चित्तमयं तथा ।
चित्तं पञ्चविधं त्यक्त्वा योगी भवति मानवः ॥ १२४॥

जगद्रूपं महच्चित्तं ब्रह्मरूपं तथा मतम् ।
जगतां ब्रह्मणां संयोगायोगं चित्तमुच्यते ॥ १२५॥

भ्रान्तियुक्तं भवेच्चित्तं नानामायाविमोहितम् ।
योगसेवापरं चित्तं भ्रान्तिहीनं तथा भवेत् ॥ १२६॥

अहं कुतस्तथा ब्रह्म कुतस्तयोश्च योगतः ।
अभेदः सर्वगं चित्तं क्रीडत्यत्र न संशयः ॥ १२७॥

नाहं सर्वत्र योगेन संयोगाभेदभावतः ।
तिष्ठामि चित्तमोहेन वदन्त्ययोगिनो मुधा ॥ १२८॥

ब्रह्म ब्रह्मणि संस्थं यन्नागतं न गतं कदा ।
अयोगधारकोऽहं न चित्तं तदेव सम्मतम् ॥ १२९॥

धर्ममिच्छति चित्तं च भ्रमयुक्तं तथार्थकम् ।
कामं मोक्षं ब्रह्मभूतं पञ्चभूमिप्रभावतः ॥ १३०॥

चित्तं त्यक्त्वा महायोगी पञ्चरूपं सुशान्तिगः ।
ब्रह्मभूतो भवेन्नूनं चिन्तामणिः प्रकथ्यते ॥ १३१॥

चित्तरूपा महाबुद्धिस्तत्र भ्रान्तिप्रदायिका ।
सिद्धिस्तयोः पतिः साक्षात् क्रीडति स्वेच्छयाऽपरः ॥ १३२॥

तं ज्ञात्वा ब्रह्मभूतश्च भवत्यत्र न संशयः ।
सिद्धिबुद्धिमयं सर्वं त्यक्त्वा योगी प्रजापते ॥ १३३॥

नैव ब्रह्मणि संयोगो नायोगो वर्तते कदा ।
सिद्धिबुद्धिभ्रमेणैव परं वाञ्छति तत्पतिः ॥ १३४॥

गणेशोऽहं न सन्देहो कुतो मयि भवेदिदम् ।
सिद्धिबुद्धिकृतं सर्वं तेन योगी स जायते ॥ १३५॥

सिद्धिबुद्धिसमायुक्तो ब्रह्मभूतो नरो भवेत् ।
शान्तियोगेन शान्तिस्थो वर्तते नित्यमादरात् ॥ १३६॥

ब्रह्मणि योगभावेन मायायुक्तविहीनता ।
शान्तिं प्राप्तः स्वयं त्यक्त्वा योगं योगी स जायते ॥ १३७॥

एतादृशभवेनैवानुभवेन युतं परम् ।
चित्तं भ्रान्तिभवं सर्वं रसं त्यक्त्वा सुतिष्ठति ॥ १३८॥

योगे रससमायुक्तं सदा भवति तत्परम् ।
निश्चलं शान्तिसंयुक्तं मायामलविवर्जितम् ॥ १३९॥

एतत्ते कथितं सर्वमनुभवभवं सुखम् ।
यज्ज्ञात्वा ब्रह्मभूतः स तिष्ठत्यत्र न संशयः ॥ १४०॥

शृणुयाद्यः पठेद्वाऽपि योगानुभवरूपगम् ।
माहात्म्यं स लभेत् सर्वं वाञ्छितं शान्तिमाप्नुयात् ॥ १४१॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमौद्गले महापुराणे
नवमे खण्डे योगचरिते मुद्गलदक्षसंवादे योगामृतार्थशास्त्रे
चित्तभूमिनिरोधेन योगिचित्तानुभवशान्तिसुखवर्णनयोगो नाम षष्ठोऽध्यायः ॥ ९.६
॥ इति योगगीतासूपनिषत्सु सुगमासु द्वितीयोऽध्यायः ॥ ९(दत्तगीता).२

## ९.७ योगस्थितिवर्णनयोगो नाम सप्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
स्थितिं वद महायोगिन् जीवन्मुक्तस्य सौख्यदाम् ।

शुभाशुभकृतं तेन कुत्र गच्छति तत्परम् ॥ १॥

कायिकं वाचिकं मानसिकं सांसर्गिकं प्रभो ।
कर्म योगिकृतं सर्वं कीदृशं तस्य का गतिः ॥ २॥

मुद्गल उवाच ।
जीवन्मुक्तः स्वयं योगी स्वेच्छाचारी भवेत् सदा ।
प्रारब्धप्रेरितः साक्षाद् वर्तते नित्यमादरात् ॥ ३॥

स्वयं ब्रह्मणि संस्थश्च बिम्बं चित्ते प्रतिष्ठति ।
योगिनस्तत्कृतं सर्वं न कदा बन्धदं भवेत् ॥ ४॥

नरवत् सर्वकर्ताऽपि तथाऽपि दोषवर्जितः ।
ब्रह्मणि ब्रह्मभूतत्वाच्छुभाशुभविवर्जितः ॥ ५॥

प्रारब्धेन स्वयं योगी प्रेरितः पुण्यमाचरेत् ।
तीर्थयात्रादिकं सर्वं यज्ञदेवार्चनादिकम् ॥ ६॥

सदा शौचसमायुक्तो नित्यं धर्मपरायणः ।
तथापि पुण्यजं भोगं भुनक्ति नैव निश्चितम् ॥ ७॥

अथवा पूर्वजेनैव प्रारब्धेन नियन्त्रितः ।
पापानि नित्यमानन्दात् प्रकुर्याद्विविधानि सः ॥ ८॥

ब्रह्महत्यादिकं सर्वं मातृगमनकादिकम् ।
मद्यपानादिकं चौर्यं प्रकुर्याद् दैवयोगतः ॥ ९॥

एवं पापसमाचारो यदि तिष्ठति मानवः ।
योगी पापफलं नैव भुनक्ति नरवत् कदा ॥ १०॥

पूर्वजन्मार्जितेनैव प्रारब्धेन प्रजापते ।
कारितं योगिना तत्र तेन किञ्चित् कृतं न च ॥ ११॥

मरणे या मतिः प्राप्ता तादृशीं लभते गतिम् ।
नरो ह्ययोगयुक्तो यो योगी ब्रह्मैव जायते ॥ १२॥

इदं संशयनाशार्थं कथितं ब्रह्मणः सुत ।
योगिनां कर्मजं सर्वं माहात्म्यं लेशतो मया ॥ १३॥

योगी योगसमायुक्तो न पापानि कदाचन ।
चरति धर्मनिष्ठः स भवत्यत्र न संशयः ॥ १४॥

लोकोद्धारकराः सर्वे योगिनः परिकीर्तिताः ।
नाचरन्ति कदा पापमहिंसादिसमन्विताः ॥ १५॥

(Page खं. ९ अ. ७ पान २५)
फलहीनस्वभावेन धर्मं चरति नित्यदा ।
योगी लोकोपकारार्थं स्वयं ब्रह्मपरायणः ॥ १६॥

कदाचित् पूर्वसंस्कारात् पापं तेन कृतं परम् ।
न तत्र पापयुक्तोऽसौ तदर्थो वर्णितः पुरा ॥ १७॥

किमर्थं प्राणिनां योगी दुःखदायकमाचरेत् ।
पापं पापसमायुक्तो न भवेन्निश्चितं पुरा ॥ १८॥

सर्वत्र गणनाथं स पश्यत्यनन्यचक्षुषा ।
पुण्येन सुखसंयुक्तं विश्वं भवति तच्चरेत् ॥ १९॥

प्रारब्धं योगिनां दक्ष न भवेत् पापकारकम् ।
पुण्यचेष्टासमायुक्तं तेषां प्रारब्धमञ्जसा ॥ २०॥

योगार्थं धर्मसंयुक्तो ब्रह्मार्पणविधानतः ।
यतते जन्मसु प्राज्ञस्तदा योगी भवेन्नरः ॥ २१॥

तस्य प्रारब्धकं दक्ष कुतो दुर्बुद्धिदायकम् ।
भवति च महायोगी धर्मयुक्तो भवेत् सदा ॥ २२॥

अथ योगिजनानां ते स्थितिं वदामि सर्वदा ।
क्रमयुक्तो यथा योगी भ्रान्तो नैव भवेत् कदा ॥ २३॥

साधयित्वा महायोगं चित्तनिरोधकारकम् ।
पञ्चविधं परित्यज्य चित्तं योगी भवेन्नरः ॥ २४॥

चित्ते चिन्तामणिं ज्ञात्वा सचित्तः सहसा गतः ।
तदाकारः स वै योगी तत्र ब्रह्मणि संरतः ॥ २५॥

प्रारब्धं योगिनां नास्ति भोगदं शास्त्रसम्मतम् ।
यदा हठयुतो योगी भवेत् प्रारब्धचालकः ॥ २६॥

देहपातं प्रकुर्याच्चेदात्महत्यां लभेन्न च ।
आयुषा संयुतो वाऽपि देहं त्यजति निश्चितम् ॥ २७॥

तथापि योगसंयुक्तो न देहं त्यजति प्रभुः ।
न प्रारब्धमतिक्रम्य करोति किञ्चिदञ्जसा ॥ २८॥

शान्तियुक्तस्वभोवन तिष्ठत्यत्र न संशयः ।
यद्भावि तद्भवत्येव मायामोहविवर्जितः ॥ २९॥

देहपातेन किं ग्राह्यं देहरक्षणतस्तथा ।
रचितं गणनाथेन सदा भवतु तादृशम् ॥ ३०॥

एवं निश्चित्य चित्तेन शान्तियुक्तस्वभावतः ।
आचरेद्योगसंयुक्तः स्वधर्मे संस्थितां क्रियाम् ॥ ३१॥

वर्णाश्रमयुतो योगी भवेद्यदि स सर्वदा ।
तदा स्वधर्मजं कुर्यात् कर्म निःसङ्गभावतः ॥ ३२॥

देहः कर्ममयः प्रोक्तस्तस्थोऽकर्मी कुतो भवेत् ।
व्यवस्थासम्भवं कर्म कृतं भवति न ह्यपि ॥ ३३॥

यदि कर्म परित्यज्य तिष्ठेद्योगपरायणः ।
तदा देहनिपातेन युक्तो भवेन्न संशयः ॥ ३४॥

अन्नभक्षणरूपं यद्भवति कर्म निश्चितम् ।
जागृत्स्वप्नादिकं सर्वं त्यक्त्वा जीवति तत्कथम् ॥ ३५॥

क्रियतेऽनेन यत्किञ्चित् सा क्रिया परिकीर्तिता ।
अतः कर्ममयो देहस्तेन धर्मं समाचरेत् ॥ ३६॥

देहत्यागे समुद्युक्तो यदि योगी भवेत् प्रभो ।
सहने द्वन्द्वभावस्य न समर्थः स वै स्मृतः ॥ ३७॥

अशान्तिसंयुतः सोऽपि योगहीनो यथा नरः ।
तथा द्वन्द्वं समालोक्य सहने न समर्थकः ॥ ३८॥

गणेशेन कृतं तस्येच्छया सर्वं च यद्भवेत् ।
भवतु तादृशं सर्वं सहे नित्यं सुशान्तिगः ॥ ३९॥

स योगी शान्तिहीनो न प्रभवेत् क्वचिदञ्जसा ।
ब्रह्मभूतो महाश्रेष्ठः पावनः सर्वदेहिनाम् ॥ ४०॥

अतो वर्णाश्रमस्थो यो योगी भवेत् स तत् क्रियाम् ।
(Page खं. ९ अ. ७ पान २६)

ब्रह्मार्पणतया कुर्याद् हृदि ध्यात्वा गजाननम् ॥ ४१॥

यदि स्वधर्मसंयुक्तं कर्म नैव समाचरेत् ।
तमक्रियं समालोक्यान्ये त्यजेयुः स्वधर्मकम् ॥ ४२॥

अतो लोकोपकारार्थं योगी कर्म समाचरेत् ।
अन्यान् कर्मयुतान् कुर्यात् स्ववशान् धर्मपालकः ॥ ४३॥

सर्वेभ्यश्चाधिको योगी कुर्यात् सत्कर्म धर्मदम् ।
तादृशं कर्म सर्वेऽपि करिष्यन्ति विशेषतः ॥ ४४॥

तेन प्रामाण्यमानन्दात् कृतं कर्म प्रजापते ।
तदेव सर्वलोकाश्च मान्यं कुर्वन्ति निश्चितम् ॥ ४५॥

ब्रह्मार्पणतया कर्म बन्धदं न भवेत् कदा ।
ब्रह्मप्राप्तिकरं तस्य फलं प्रोक्तं मनीषिभिः ॥ ४६॥

योगिभिश्च कृतं कर्म लोकसङ्ग्रहकारणात् ।
असक्तमनसा नित्यं नैमित्तिकं न बन्धदम् ॥ ४७॥

सदा ब्रह्ममयत्वेन तेन किञ्चित् कृतं न च ।
देहस्वभावजो भावो भवेदस्य निरन्तरम् ॥ ४८॥

अन्यं मार्गं प्रवक्ष्यामि ये निन्दन्ति स्तुवन्ति तम् ।
योगिनं पापभोक्तारो भवन्ति पुण्यभोगिनः ॥ ४९॥

योगिना यत् कृतं पापं तत् स्प्रष्टुं न क्षमं कदा ।
निन्दकांस्तत् समाश्रित्य प्रतिष्ठेत्तस्य नित्यदा ॥ ५०॥

योगिना यत् कृतं पुण्यं तदेव तं न संस्पृशेत् ।
स्तुवतस्तान् समाश्रित्य नित्यं तिष्ठेत् स्वभावजम् ॥ ५१॥

अतो न योगिनां निन्दां कदा कुर्याद्विचक्षणः ।
सेवां समाचरेत्तेषां तेन सौख्ययुतो भवेत् ॥ ५२॥

वने यदि स्थितो योगी प्रारब्धेन नियन्त्रितः ।
फलादिकं तत्र भुञ्जन् शान्त्या तिष्ठेत् स नित्यदा ॥ ५३॥

तत्र निन्दाकरास्तस्य तथा सेवाकरा न च ।
एक एव महायोगी शुभाशुभं समाचरेत् ॥ ५४॥

तदेव देहपातेऽस्य योगिनश्च मृतं भवेत् ।
शुभाशुभं निराधारमुपोषणसमन्वितम् ॥ ५५॥

एतत्ते कथितं दक्ष ब्रह्मीभूतस्य चेष्टितम् ।
कर्म योगमयं पूर्णं श्रवणाच्छुभदं भवेत् ॥ ५६॥

अथ योगं प्रवक्ष्यामि ज्ञानात्मकमहं परम् ।
योगिभ्यः सुखदं पूर्णं शान्तियुक्तं विशेषतः ॥ ५७॥

देहः कर्मात्मकः प्रोक्तस्तत्र योगं समाचरेत् ।
ब्रह्मार्पणतया कर्म चाचरन् शान्तिधारकः ॥ ५८॥

ज्ञानं स्फूर्तिमयं प्रोक्तं हृदि तिष्ठति सर्वदा ।
विवेकात्ममयं तत्र ज्ञानयोगं समाचरेत् ॥ ५९॥

हृदि यद्यद् भवेज्ज्ञानं नानायोगार्थसौख्यदम् ।
अथवा विषयार्थानां बोधकं तत् स सन्त्यजेत् ॥ ६०॥

उत्पत्तिनाशसंयुक्तं ज्ञानं विषयबोधकम् ।
ब्रह्म सौख्यप्रदं ज्ञानं योगभूमिप्रभावजम् ॥ ६१॥

उपाधिसंयुतं चैकमनुपाधियुतं परम् ।
तत्त्यक्त्वा योगसंयुक्तो भवेद्योगी महायशाः ॥ ६२॥

ज्ञानानां सकलानां च योगे ज्ञानमयः स्मृतः ।
योगस्तत्र भवेल्लीनो ब्रह्मीभूतस्वभावतः ॥ ६३॥

ब्रह्मणि ब्रह्मीभूतोऽहं मम ज्ञानं कुतो भवेत् ।
नानाभ्रान्तिकरं हृत्स्थं त्यक्त्वा ब्रह्मपरो भवेत् ॥ ६४॥

अनेन विधिना सर्वं ज्ञानं त्यक्त्वा हृदि स्थितम् ।
शान्तियुक्तः स्वयं योगी तिष्ठेद्ब्रह्मपरायणः ॥ ६५॥

न कर्ताऽहं कदाचिद्वै कारयिता न निश्चितम् ।
(Page खं. ९ अ. ७ पान २७)
मायामोहयुता मां ते वदन्ति कर्मकारिणम् ॥ ६६॥

अहं साक्षी शरीरस्य यद्देहेन कृतं भवेत् ।
तन्मया न कृतं क्वापि ब्रह्माहं परतः परः ॥ ६७॥

यद्यत् स्फूर्तिर्भवेन् मे वै सा माया भ्रान्तिदायिका ।

न तस्यां संस्थितो जीवः सदा साक्षिस्वभावतः ॥ ६८॥

न मोहेन समायुक्तो न कदा मोहवर्जितः ।
मायया मां वदन्त्येव ह्ययोगिनो न संशयः ॥ ६९॥

एवं सदा महायोगी साक्षिवत्संस्थितो भवेत् ।
हृदयज्ञानयोगस्थस्त्यक्त्वा स्फूर्तिभवं भ्रमम् ॥ ७०॥

सर्वत्र रसहीनं यन् मनस्तस्य महात्मनः ।
शान्त्या युक्तं भवेद्दक्ष ब्रह्मीभूतस्य नित्यदा ॥ ७१॥

एष ते कथितो योगो ज्ञानात्मको विशेषतः ।
साक्षिवद्देहसंस्थः स मया तिष्ठति लेशतः ॥ ७२॥

अतः परं समं योगं शृणु स्थितिपरायण ।
यं ज्ञात्वा ब्रह्मभूतो यः शान्तिहीनो भवेन्न सः ॥ ७३॥

देहः कर्मत्रयस्तत्र कर्मयोगं समाचरेत् ।
मनो विवेकरूपं तु साक्षित्वं तत्र सञ्चरेत् ॥ ७४॥

अहं ब्रह्म यदा दक्ष कुतस्तत्र भवेदिदम् ।
द्वन्द्वरूपं विशेषेण तस्य वक्ष्यामि रूपकम् ॥ ७५॥

देहः कर्ममयः प्रोक्तो विवेकः कर्मवर्जितः ।
द्वन्द्वं ज्ञात्वा महायोगी समयोगं समाचरेत् ॥ ७६॥

देहे कर्ममयोऽहं तु हृदि साक्षी तथाऽमलः ।
उभयोर्योगभावेन भवति किञ्चिदञ्जसा ॥ ७७॥

यदा विवेकहीनश्चेत् देहः किं तु करिष्यति ।
देहहीनं मनस्तद्वज्ज्ञानदं कस्य वा भवेत् ॥ ७८॥

आनन्दमयभावेन संस्थितोऽहं तदात्मकः ।
उभयत्र ततः स्वस्वव्यापारं कुरुतः परौ ॥ ७९॥

देहे कर्ममयोऽहं वै हृदि विवेकधारकः ।
द्विविधां रच्यतां मायां सदानन्दनधर्मगः ॥ ८०॥

तयोः समानभावेन संस्थितोऽहं न संशयः ।
अनुपाधेरुपाधेश्च वर्जितो ब्रह्मसंज्ञितः ॥ ८१॥

अतः समं समाश्रित्य बाह्यान्तरैकभावतः ।
यादृशं संस्थितं ब्रह्म तादृशं तत्र चाचरेत् ॥ ८२॥

देहे कर्मकरो भूत्वा हृदि साक्षिमयो भवेत् ।
उभयं तत् परित्यज्यानन्दावस्थां समाचरेत् ॥ ८३॥

यद्यदुभयभावाख्यं नानाभेदमयं परम् ।
तत्र योगमयो भूत्वा तिष्ठेदानन्दसंयुतः ॥ ८४॥

आनन्दानां समायोगे ब्रह्मानन्दः प्रकीर्तितः ।
उभयेषां प्रजानाथ तादृशं चाचरेद्बुधः ॥ ८५॥

मदीयसङ्गयोगेनोभयं प्रवर्तते सदा ।
उभयं चाचरेत् सर्वमुभाभ्यां वर्जितोऽपि सः ॥ ८६॥

इयमानन्दरूपाख्या कथिता योगिभिः पुरा ।
ब्रह्मीभूतः समास्थाय तिष्ठेत्तां शान्तिसंयुतः ॥ ८७॥

अतः परं प्रजानाथावस्थां शृणु सुखप्रदाम् ।
सहजाख्यां महायोगी चाचरेत्तां विशेषतः ॥ ८८॥

देहः कर्ममयः प्रोक्तस्तत्र योगं समाचरेत् ।
ब्रह्मार्पणतया नित्यं कर्मणां योगिसत्तमः ॥ ८९॥

हृदि साक्षिस्वभावेन तिष्ठेत्तयोः परे ततः ।
समभावं समाश्रित्य त्रिषु त्रैधं प्रकीर्तितम् ॥ ९०॥

तेषु विस्मृतिभावेन भ्रान्त्या वा विस्मृतं भवेत् ।
विपरीतं भवेद्वाऽपि ततः खेदं न धारयेत् ॥ ९१॥

त्रिविधं मायया युक्तं पराधीनं प्रकीर्तितम् ।
तुर्यं स्वाधीनरूपाख्यं प्रोक्तं शास्त्रेषु सर्वदा ॥ ९२॥

तुर्येच्छया त्रिधा भूतं चलत्यत्र न संशयः ।
स्वस्वप्रारब्धसंयुक्तं सदा भ्रान्तमिव स्थितम् ॥ ९३॥

न कस्याहङ्कृतिस्तस्य तुरीयस्य कदाचन ।
यादृशं कुरुते कर्म तादृशं फलमश्नुते ॥ ९४॥

अतः प्रारब्धयोगेन विस्मृतोऽहं स्थितिं पराम् ।
योगरूपां च तुर्येण प्रेरितः सर्वधारिणा ॥ ९५॥

अथवा ज्ञानमोहेन विपरीतं कृतं मया ।
त्यक्त्वा योगस्थितिं पूर्णां प्रारब्धं तत्र मुख्यकम् ॥ ९६॥

प्रारब्धधारकं प्रोक्तं तुरीयं नात्र संशयः ।
तस्येच्छया च यज्जातं तदेवं योगदं भवेत् ॥ ९७॥

पराधीनोऽहमत्यन्तं तुर्येच्छया समन्वितः ।
करोमि कर्म साक्षित्वमानन्दं वा न संशयः ॥ ९८॥

सदा स्वाधीनभावेन तिष्ठति ब्रह्म तुर्यगम् ।
तुरीयैः खेलकं प्रोक्तं तस्य किं बन्धनं भवेत् ॥ ९९॥

यज्जातं तत्कृतं तेन तुरीयेण न संशयः ।
तत्र कुत्र स्थितोऽहं तु स्वेच्छया क्रीडति प्रभुः ॥ १००॥

इयं तु सहजावस्था कथिता ते प्रजापते ।
यज्जातं तत्र सा प्रोक्ता न कृता तदपि ह्यहो ॥ १०१॥

यत्कृतं सह जातेन स्वयमेव प्रवर्तते ।
योगस्तेन समाख्याता सहजा तुर्यसंज्ञिता ॥ १०२॥

अतः परं ब्रह्मभूतं स्वानन्दाख्यं प्रकीर्तितम् ।
तत्र योगस्वरूपाख्यां स्थितिं शृणु सुखप्रदाम् ॥ १०३॥

स्वाधीनं तुर्यभावाख्यं पराधीनं त्रिधा मतम् ।
तेषां योगे निजात्मस्थो भवेद्योगी निजात्मसु ॥ १०४॥

त्रिविधं खेलरूपं तु तुर्यः खेलक उच्यते ।
तयोर्योगे प्रजानाथ स्वानन्दस्थो भवेन्नरः ॥ १०५॥

ब्रह्मणि ब्रह्मभूतस्य योगिनश्च कुतो भवेत् ।
स्वाधीनं तु पराधीनं मायायुक्तं न संशयः ॥ १०६॥

योगस्थितिं समाश्रित्य बुधश्चत्वारि चाचरेत् ।
तेषां संयोगरूपेण तिष्ठेत्तेषु महात्मवान् ॥ १०७॥

कर्मयोगं समाश्रित्य देहचेष्टां समाचरेत् ।
ज्ञानयोगं तथाऽऽश्रित्य साक्षित्वं चाचरेत् बुधः ॥ १०८॥

समयोगं समाश्रित्य आनन्दं आचरेत् परम् ।

सहजं स समाश्रित्य विपरीतेन शोकभाक् ॥ १०९॥

चतुर्भिः संयुतो भूत्वा चतुर्भिर्वर्जितस्तथा ।
तिष्ठेद्योगमयीं दक्षावस्थामाश्रित्य सर्वदा ॥ ११०॥

अवस्था निजरूपे तु कुतोऽवस्थाप्रधारकः ।
तयोर्योगे योगमयी व्यवस्था ते प्रकीर्तिता ॥ १११॥

चतुर्मयी चतुर्हीना योगावस्था प्रकीर्तिता ।
योगिभिस्तां समाश्रित्य शान्तिहीनो भवेन्न सः ॥ ११२॥

अधुना शृणु योगस्थामवस्थां द्वितीयां पराम् ।
अयोगधारिकां पूर्णां सदा निवृत्तिदायिकाम् ॥ ११३॥

ब्रह्मणि ब्रह्मभूतो यो योगी तां संश्रयेत् पराम् ।
यदा निवृत्तिसंयुक्तः शान्तिहीनो भवेन्न सः ॥ ११४॥

ब्रह्मणि ब्रह्मसंस्थं तन्नागतं न गतं पुनः ।
मायायां ब्रह्मभूतो योऽवस्थाया धारकः कुतः ॥ ११५॥

यत् कुर्यात् कारयेद्यच्च तत्र नैवावलोकयेत् ।
(Page खं. ९ अ. ७ पान २९)
मायामयं विनिश्चित्य पञ्चकं पञ्चकेषु गम् ॥ ११६॥

नाहं पञ्चकगश्चेद्वै ततस्तत्कृतमञ्जसा ।
कुतो मयि प्रदृश्येताधार्यनिवृत्तिगो भवेत् ॥ ११७॥

जीवनं मरणं जन्म योगो योगात्मिका परा ।
अवस्था मे कुतो मायामोहयुक्तं स्मृतं बुधैः ॥ ११८॥

अथ योगमयीं पूर्णामवस्थां शृणु मानद ।
संयोगायोगहीनां तां यया शान्तो भवेन्न सः ॥ ११९॥

ब्रह्मणि ब्रह्मभूतोऽहं मयि मायामयं परम् ।
पञ्चकं च कुतो भाति मायाहीनमयोगकम् ॥ १२०॥

विधिनिषेधसंयुक्तं चित्तं भवति सर्वदा ।
विधिनिषेधहीनं तु तदेवं जायते मुधा ॥ १२१॥

देहेन कर्मयोगश्च ज्ञानगो हृदि जायते ।
उभयत्र समश्चैव तुर्येषु सहजात्मकः ॥ १२२॥

सर्वसंयोगभावेषु स्वानन्दाख्यः प्रवर्तते ।
निवृत्तिषु ह्ययोगाख्यो योगेषु शान्तियोगकः ॥ १२३॥

एवं नानाविधं योगं समास्थाय महामतिः ।
योगी शान्त्या समातिष्ठेद्ब्रह्मीभूतोऽपि निश्चितम् ॥ १२४॥

योगस्थितिः समाख्याता ब्रह्मीभूतसुखप्रदा ।
अनेन विधिना देहनिर्वाहो योगिनां भवेत् ॥ १२५॥

वर्णाश्रमस्थितो योगी चाचरेत् स्थितिमुत्तमाम् ।
लोकसङ्ग्रहकार्यार्थमसक्तस्तत्फलादिषु ॥ १२६॥

यदा वर्णाश्रमं त्यक्त्वा पञ्चमाश्रमधारकः ।
न तस्य स्थितिरूपं तु कदाचिन्नात्र संशयः ॥ १२७॥

विधिनिषेधहीनोऽयं विनायको भवेत् सदा ।
यद्यत् कुर्यात् स तत् सर्वं योगरूपं भवेत् सदा ॥ १२८॥

यदि स्थितिसमायुक्तो वेदादिषु प्रमाणतः ।
तदा विधियुतः सोऽपि भवेत् पश्य प्रजापते ॥ १२९॥

यदा स्थितिविहीनोऽयं तिष्ठेत् सङ्कथितं परम् ।
वेदेषु स निषेधेन तदा युक्तो भवेत् परः ॥ १३०॥

अतः स्थितियुतो योगी स्थितिहीनो यथारुचि ।
वर्णाश्रमान् परित्यज्य तिष्ठेद्विनायको यथा ॥ १३१॥

शान्त्या नित्यं चरेत् सर्वं मनसीप्सितमञ्जसा ।
विधिनिषेधहीनश्च ब्रह्मणि रसधारकः ॥ १३२॥

एतत् सर्वं समाख्यातं योगिनां चेष्टितं महत् ।
ब्रह्मभूतात् परं पूर्णं चरेदेवं निरन्तरम् ॥ १३३॥

शृणुयाद्यः पठेद्वाऽपि स सर्वं हीप्सितं लभेत् ।
अन्ते योगमयो भूत्वा तिष्ठेत् स गणपे रतः ॥ १३४॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
नवमे खण्डे योगचरिते मुद्गलदक्षसंवादे योगामतार्थशास्त्रे
योगस्थितिवर्णनयोगो नाम सप्तमोऽध्यायः ॥ ९.७

॥ इति योगगीतासूपनिषत्सु सुगमासु तृतीयोऽध्यायः ॥ ९(दत्तगीता).३

## ९.८ योगभ्रष्टचरितनिरूपणं नाम अष्टमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
योगशान्तिं समाश्रित्य योगमभ्यस्य नित्यदा ।
ब्रह्मणि ब्रह्मभूतः स योगभ्रष्टः कथं भवेत् ॥ १॥

मायामयं जगत् सर्वं नानाभ्रमसमन्वितम् ।
ज्ञात्वा स्वयं पुनर्भ्रष्टः कौतुकं वद मे मुने ॥ २॥

मुद्गल उवाच ।
ब्रह्मणि ब्रह्मभूतस्य योगिनो बिम्बसंस्थितम् ।
बुद्धौ तस्यां विमोहेन मोहयुक्तं प्रजापते ॥ ३॥

दृष्ट्वा नानाविधान् भोगान् स्वयं मोहेन मोहितः ।
तेषु भूत्वा रसयुतो तानिच्छति निरन्तरम् ॥ ४॥

तत्र तस्य हृदि दक्ष विवेकः संस्थितो भवेत् ।
तस्य रूपं प्रवक्ष्यामि शृणु बुद्धिविशारद ॥ ५॥

अहं ब्रह्मणि योगेन ब्रह्मीभूतो न संशयः ।
पापपुण्यादिकं मे न शुभाशुभकृते भवेत् ॥ ६॥

यदा भोगं परित्यज्य तिष्ठामि नित्यमादरात् ।
तदा योगस्य वृद्धिर्मे न भविष्यति निश्चितम् ॥ ७॥

यदा नित्यं प्रभुञ्जाने भोगान्नानाविधान् परान् ।
पापपुण्यमनादृत्य तदा योगक्षयो न च ॥ ८॥

अतोऽहं योगमृत्सृज्य किमर्थं दुःखसंयुतः ।
तिष्ठामि शान्तिमाश्रित्य विधिनिषेधसंयुतः ॥ ९॥

एवं मनसि सन्धार्य योगी भोगेषु लालसः ।
विविधेष्वेव भवति रसयुक्तः क्रमेण सः ॥ १०॥

अयं मोहः समाख्यातो योगिहृद्भ्रान्तिदायकः ।
तेन शान्तिं परित्यज्य पापपुण्यपरो भवेत् ॥ ११॥

ततः कामं समाश्रित्य देहसौख्यप्रदायकम् ।
इच्छेत् स विविधान् भोगान् पुण्यपापपरायणः ॥ १२॥

भोगार्थं यतमानस्य योगिनः क्रमभावतः ।
तत्र विघ्नः कृतः केन ततः क्रोधयुतो भवेत् ॥ १३॥

येन विघ्नः कृतस्तेषु भोगेषु तस्य भोगिनः ।
तं शत्रुं स हि जानाति भिन्नभावपरायणः ॥ १४॥

ततो ह्यज्ञानसम्भूतिः क्रमेणोत्पद्यते परा ।
योगिनश्च तया युक्तो हन्तुं तं यतते सदा ॥ १५॥

शत्रुशिक्षार्थमर्थान् स नानाभावसमन्वितः ।
सम्पाद्य तं तु निर्जित्य भोगान् भुङ्क्ते प्रयत्नतः ॥ १६॥

स्वपरज्ञानहीनत्वं गतं तस्य प्रजापते ।
तदेवाज्ञानसम्भूतिः शत्रुमित्रप्रदर्शिनी ॥ १७॥

ततः शान्तेः क्रमेणास्य विस्मृतिर्जायते परा ।
तया युतः स्वयं देहं मन्यते सत्यरूपकम् ॥ १८॥

देहे सन्तोषमापन्ने कृतकृत्यमिव स्थितम् ।
मन्यते विपरीते स आत्मानं भाग्यवर्जितम् ॥ १९॥

ततो योगं परित्यज्य स्वयं बिम्बी प्रजायते ।
बिम्बे तन्मयभावेनागमिष्यति न संशयः ॥ २०॥

एवं क्रमेण योगी स शान्तिहीनस्वभावतः ।
सदा तिष्ठति तं योगं नाश्रयते कदाचन ॥ २१॥

सुखयुक्ते शरीरे स सुखयुक्तो भवेत् स्वयम् ।
दुःखयुक्ते तथा दुःखी नानाभावपरायणः ॥ २२॥

लेशमात्रमयं शान्तिं लभते न कदाचन ।
असन्तोषयुतो नित्यं भ्रमते भोगलिप्सया ॥ २३॥

भोगार्थं विविधान्येव नित्यं पापानि चादरात् ।
चरते सर्वपुण्यानि विधिनिषेधवर्जितः ॥ २४॥

वर्णाश्रमयुतो योगी स्वधर्मं त्यज्य नित्यदा ।
पापं चरति वा पुण्यं स्वधर्मैः संयुतः कदा ॥ २५॥

(Page खं. ९ अ. ८ पान ३१)
योगान् भुङ्क्ते विशेषेण मोहयुक्तो निरन्तरम् ।
योगभ्रष्टोऽयमाख्यातस्त्यक्त्वा योगं नरो भवेत् ॥ २६॥

हृदि तस्य विवेकश्च सदा तिष्ठति मोहदः ।
पुण्यपापविहीनोऽहं ब्रह्मैव ब्रह्मभावितः ॥ २७॥

अन्ते स नरकान् गच्छेद् द्वन्द्वदुःखप्रदायकान् ।
यातनां घोररूपां तु पतेद्भुक्त्वा धरातले ॥ २८॥

दक्ष उवाच ।
योगभ्रष्टगतिं ब्रूहि योगीन्द्र दयया पराम् ।
कथं नरकगो भूत्वा यातनां प्राप्नुयात् परम् ॥ २९॥

कर्मफलपरित्यागादिहजन्मधरः कथम् ।
सम्भवेद्विस्मयो भाति चेष्टितं योगिनः परम् ॥ ३०॥

मुद्गल उवाच ।
ब्रह्मणि ब्रह्मभूतस्य पुनर्विषयसेवनात् ।
ब्रह्मणो भक्तिहीनस्यान्ते स्थानं न भवेत् किल ॥ ३१॥

अपारपुण्ययोगेन ब्रह्मणि देहिनः कदा ।
रसोत्पत्तिर्भवेद्दक्ष सर्वश्रेष्ठस्य योगदा ॥ ३२॥

देहविषयसंयोगाद् द्वन्द्वभावपरात्मनः ।
नानापापादियोगेन पुण्यं स्वल्पं प्रहीयते ॥ ३३॥

मृतोऽयं शिवलोके वै वैकुण्ठे सौरशाक्तयोः ।
ब्रह्मण इन्द्रलोके वा पतेदन्ते न संशयः ॥ ३४॥

शोकहर्षप्रदं विश्वं नानाद्वन्द्वसमन्वितम् ।
नरको नात्र सन्देहो योगिनां शास्त्रसम्मतम् ॥ ३५॥

उत्पत्तिनाशसंयुक्तं त्यक्त्वा ब्रह्मपरायणः ।
ब्रह्मणि ब्रह्मभूतः स पुनर्द्वन्द्वपरो यतः ॥ ३६॥

विकुण्ठादिपदे संस्थो द्वन्द्वं भुङ्क्ते निरन्तरम् ।
उत्पत्तिनाशसंयुक्तं नानाभोगपरायणः ॥ ३७॥

अतो योगी प्रजानाथ स्वर्गाख्यान्नरकान् परान् ।
भुक्त्वा द्वन्द्वमयान् पश्चादिह जन्मधरो भवत् ॥ ३८॥

भवेद्योगिकुले तस्य जन्म वा तापसे कुले ।
ऋद्धिमतां स तत्रापि पुनर्योगं चरिष्यति ॥ ३९॥

पूर्वसंस्कारयोगेन न भोगे स रमेत् कदा ।
चित्तं तस्य महायोगी प्रभवेत् स्वल्पयोगतः ॥ ४०॥

पुनर्न योगभ्रष्टः स सम्भवेद्ब्रह्मणः सुत ।
शान्त्यायुक्तस्वभावेन शरीरं पोषयेन् मुदा ॥ ४१॥

अन्ते ब्रह्मणि योगी स तदाकारो भवेत् परम् ।
योगसंस्कारपुण्येन स्थितिं लब्ध्वा महामतिः ॥ ४२॥

एतत्ते कथितं पूर्णं योगभ्रष्टस्य चेष्टितम् ।
किं पुनः श्रोतुमिच्छा ते वद धातर्वदाम्यहम् ॥ ४३॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
नवमे खण्डे योगचरिते मुद्गलदक्षसंवादे योगामृतार्थशास्त्रे
योगभ्रष्टचरितनिरूपणं नाम अष्टमोऽध्यायः ॥ ९.८
॥ इति योगगीतासूपनिषत्सु सुगमासु चतुर्थोऽध्यायः ॥ ९(दत्तगीता).४
(Page खं. ९ अ. ९ पान ३२)

## ९.९ अज्ञानिनां क्रमयोगवर्णनं नाम नवमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
चित्तं चञ्चलमत्यन्तं विषयेषु परायणम् ।
दुर्ग्रहं शान्तिसंयुक्तं न भवेन् मुनिसत्तम ॥ १॥

अतो योगस्य प्राप्त्यर्थं सिद्ध्यर्थं सुगमं ततः ।
उपायं वद चित्तस्य जयार्थं वाऽपरं प्रभो ॥ २॥

मुद्गल उवाच ।
पञ्चचित्तेषु यद्बिम्बं स्थितं भ्रान्त्या समन्वितम् ।
चिन्तामणेः समाख्यातं तस्यैव भजनं चरेत् ॥ ३॥

तेन चित्तं जयेद्योगी नान्यं पश्यामि भो विधे ।
विना चित्तजयं योगदायकं नात्र संशयः ॥ ४॥

दक्ष उवाच ।
सुगमं वद मार्गं मे सर्वेभ्यो ब्रह्मदायकम् ।
संसेव्य जन्तवः सर्वे ब्रह्मीभूता भवन्ति वै ॥ ५॥

मुद्गल उवाच ।
अज्ञानेन समायुक्तो नरो विषयलम्पटः ।
शिश्नोदरपरो नित्यं योगं नेच्छति कर्हिचित् ॥ ६॥

तस्य सकामिकं कर्म सुखदं बोधयेत् परम् ।
अलभ्यप्रापकं हृद्यमाचरेल्लोभसंयुतः ॥ ७॥

अलभ्यलभ्यलोभेन त्यक्त्वा पापं महाखलः ।
सत्कर्मनिरतो भूत्वा चरेत् पुण्यं निरन्तरम् ॥ ८॥

ततस्तेनैकभावेन पापं नश्येन्निरन्तरम् ।
शुद्धोऽत्यन्तं नरः कुर्यात् कर्म कामयुतं परम् ॥ ९॥

समाप्नुयात्ततोऽलभ्यं हृद्यं चेत् पुनरेव सः ।
विश्वासेन समायुक्तः कुर्यात् कर्म विशेषतः ॥ १०॥

अथवा नैव सम्प्राप्तमलभ्यं तेन तं तदा ।
उपादिशेद्विशेषेणाधिकं सत्कर्म चाचर ॥ ११॥

अनन्तजन्मभिः पापं त्वया कृतमसंशयम् ।
अपारमन्तरायो भवति ते तद्विघातकम् ॥ १२॥

एवं कर्मपरः सोऽपि दुःखितोऽत्यन्तमाचरेत् ।
पापनाशार्थमानन्दात्तेन शुद्धान्तरो भवेत् ॥ १३॥

सत्कामिकपरस्यास्य कर्मात्यन्तप्रभावतः ।
तस्य बुद्धिर्भवेत् दक्ष निःकामिकपरायणा ॥ १४॥

जन्ममृत्युप्रदा भोगा भुक्ता विविधजन्मसु ।
अपारसुखदं ब्रह्म न प्राप्तं देहधारिणा ॥ १५॥

अलभ्यं न मया प्राप्तं प्रारब्धाधीनतोऽथवा ।
प्रारब्धं चालितुं कोऽपि न समर्थो भविष्यति ॥ १६॥

अतो निःकामिकं कर्म करोमि नित्यमादरात् ।
जन्ममृत्युविहीनोऽहं भविष्यामि न संशयः ॥ १७॥

ब्रह्मसुखमपारं यल्लब्ध्वा ब्रह्मपरायणः ।
ब्रह्मीभूतो भविष्यामि यत्नं करोमि तत्परः ॥ १८॥

एवं धार्य परित्यज्य कामान् सेवेत् स पञ्चकान् ।
देवान् गणेशमुख्यांश्च मुक्तिमार्गपरायणः ॥ १९॥

सालोक्यादिभवं सौख्यमिच्छति नित्यमादरात् ।
क्रमेण तपसा युक्तो प्रभवेन् मानवस्ततः ॥ २०॥

विभूतिर्ब्रह्मणः प्रोक्ता नानारूपा प्रजापते ।
तत्र तस्य रमेच्चित्तमैश्वर्यैर्युक्तभावतः ॥ २१॥

इमे समर्थरूपा वै ब्रह्मणः परमात्मनः ।
अंशतेजोधरास्तस्य सर्वाधीशा भवन्त्यतः ॥ २२॥

एवं सर्वत्र सञ्चिन्त्य तेषां पूजापरो भवेत् ।
लभेत्तत् कृपया दक्ष चित्तशुद्धिं नरोत्तमः ॥ २३॥

विचारेण गणेशानं ज्ञात्वा सम्पूर्णमञ्जसा ।
सर्वपूज्यादिचिह्नैस्तं श्रेष्ठं तत्र रतो भवेत् ॥ २४॥

ज्ञात्वा स्वानन्दनाथं तं स्वानन्दार्थं विशेषतः ।
प्रभजेद्गणराजं स निष्कामभक्तिसंयुतः ॥ २५॥

ततोऽहर्निशमत्यन्तं भजेत्तत्तपसा युतः ।
(Page खं. ९ अ. ९ पान ३३)
मोक्षार्थं सर्वभावेन विरक्तो विषयादिषु ॥ २६॥

गणेशकृपया तस्य चित्तशुद्धिर्भवेत् परा ।
तया सर्वस्वभावेन भजेत्तं गणनायकम् ॥ २७॥

विश्वं चराचरं सर्वं जानीयात्तत्स्वरूपकम् ।
सर्वेषां हितभावेन भजेत्तं द्विरदाननम् ॥ २८॥

कस्यापि सम्भवेत् दुःखं तादृशं प्रचरेन्न सः ।
सहन् सन् द्वन्द्वजं भावमार्जवेन समन्वितः ॥ २९॥

देवकार्यं विना साधुर्न छिन्द्यात् स कदाचन ।

पत्रादिकं विशेषेण विश्वरूपपरायणः ॥ ३०॥

एकान्ते निर्जने स्थाने स्थित्वा ध्यात्वा गजाननम् ।
पूजयेद्भक्तिसंयुक्तो ध्यानं कुर्याद्विशेषतः ॥ ३१॥

अनन्यमनसा देवं भजेत्तं भावधारकः ।
शमदमपरो भूत्वा चित्तनिग्रहमाचरेत् ॥ ३२॥

दुर्जयं चित्तमत्यन्तं ज्ञात्वा वायुनिबन्धतः ।
प्राणायामपरो भूत्वा जयेत्तन्नात्र संशयः ॥ ३३॥

अथ वायुनिरोधस्य वदामि मार्गमुत्तमम् ।
येन पापं परित्यज्य शुद्धचित्तो नरो भवेत् ॥ ३४॥

पूरयेद्वामनासायां वायुं तस्माच्चतुर्गुणम् ।
धारणं तस्य कुर्यात् स स्वोदरे नियतो भवेत् ॥ ३५॥

पूरकाद् द्विगुणं कुर्याद्रेचकं च प्रजापते ।
पुनर्नसा दक्षिणया पूरयेत् कुम्भकं चरेत् ॥ ३६॥

वामया रेचकं चैव पुनः पुनर्निरन्तरम् ।
प्राणायामं चरेद् धीमान् पापहीनो नरो भवेत् ॥ ३७॥

एवं त्रैकालिकं कुर्यात् प्राणायामं विशेषतः ।
नातिनिरोधसंयुक्तं वायुं हठसमन्वितः ॥ ३८॥

अतिहठेन संरुद्धो वायू रोमभ्य एव च ।
निःसृत्य कुष्ठसंयुक्तं तं करोति न संशयः ॥ ३९॥

नाभिमूलस्थिता नाडी इडा च पिङ्गलाऽपरा ।
सुषुम्णा तत्र रोधेन मार्गो भवति निर्मलः ॥ ४०॥

अपानो नाभिमूलस्थो ह्यधो गच्छति सर्वदा ।
प्राण ऊर्ध्वं तथा जन्तोर्नाडीभिः प्रेरितः सदा ॥ ४१॥

मार्गरोधनभावेन नाड्यां मार्गो भविष्यति ।
वायुर्मूलं समाश्रित्य तिष्ठति क्रमतस्ततः ॥ ४२॥

तत्र लघ्वक्षराण्येव द्वादशापि प्रतिष्ठति ।
वायुश्चेत् स लघुः प्रोक्तः प्राणायामश्च योगिभिः ॥ ४३॥

ततो द्विगुणतस्तिष्ठेद्यदा वायुः सुरोधितः ।
मध्यमः स समाख्यातस्त्रिगुणादुत्तमोत्तमः ॥ ४४॥

एवं प्राणमपानं च स्वमूले सन्नयेद् बुधः ।
तयो रोधनभावेन मूलगौ तौ भविष्यतः ॥ ४५॥

एवं क्रमेण मूलेऽयं वायुर्मुहूर्तं संस्थितः ।
तदा समानगा नाडी भिद्यते तत्र संस्थिता ॥ ४६॥

सा सुषुम्णा समाख्याता तत्र सम्मिलितौ क्रमात् ।
प्राणापानौ समौ भूत्वा तद्रूपौ तौ भविष्यतः ॥ ४७॥

त्रिकालज्ञः स्वयं सिद्धो भविष्यति नरोत्तमः ।
वायुसाधनपात्रत्वं प्राप्य तेजःसमन्वितः ॥ ४८॥

ततः स्वाधीनतां यातौ प्राणापानौ विशेषतः ।
स नयिष्यति तौ यत्र क्रमात्तत्र गमिष्यतः ॥ ४९॥

ततो ध्यानपरो भूत्वा षड्चक्रभेदने रतः ।
चक्रस्थं स्वस्वरूपं स पश्येत्तद्वायुना गतः ॥ ५०॥

एवं क्रमेण योगीन्द्रो गच्छेद्भेद्य प्रजापते ।
सहस्रारे स चक्राणि तत्र पश्येद्गजाननम् ॥ ५१॥

(Page खं. ९ अ. ९ पान ३४)
तत्र क्रमेण वायुं संस्थापयेत् सुसमाधिना ।
वायुना संयुतस्तिष्ठेत् पश्यन् विघ्नेश्वरं परम् ॥ ५२॥

क्रमाद्वायुबलेनैवं शुद्धचित्तो भविष्यति ।
पश्येत् सर्वत्र भावेषु स्थितं ब्रह्म सनातनम् ॥ ५३॥

ततः स्वाधीनतायुक्तः प्रभवेत् स्वेन तेजसा ।
यं यमिच्छेत् स तं तं तु सद्यो वै सफलं भवेत् ॥ ५४॥

किञ्चिदिच्छेन्न यो योगी तदा योगमवाप्नुयात् ।
नो चेच्छन्दरतो भूत्वा भोगयुक्तः पुनः पतेत् ॥ ५५॥

साधनं द्विविधं प्रोक्तं क्रियारूपं प्रजापते ।
बाह्यं कर्मस्वरूपाख्यं तपोयुक्तं स्वधर्मजम् ॥ ५६॥

आन्तरं वायुरोधाख्यं सर्वसिद्धिप्रदायकम् ।

ताभ्यां चित्तं विनिर्गृह्य स्ववशं कारयेन्नरः ॥ ५७॥

बाह्यकर्मरताज्जन्तोरान्तरं शीघ्रसिद्धिदम् ।
सहस्राधिकभावाख्यं प्रोक्तं योगीन्द्रमुख्यकैः ॥ ५८॥

अतः परं तृतीयं ते साधनं कथयाम्यहम् ।
येन योगीन्द्रसेव्यः स ध्रुवं भवति मानवः ॥ ५९॥

चित्तशुद्धेश्च कार्यार्थं कर्म द्विविधमुच्यते ।
शुद्धचित्तो नरः पश्चात् सम्पश्येद्ब्रह्म शाश्वतम् ॥ ६०॥

सर्वत्र पूर्णभावेन संस्थितं परमव्ययम् ।
अवयवादिभिर्हीनं तत्र लीनो भवेत् स्वयम् ॥ ६१॥

एतावान् फलादाताऽयं क्रियायोगः प्रकीर्तितः ।
बाह्यान्तरात्मकः पूर्णस्ततोऽन्यत् साधनं चरेत् ॥ ६२॥

चित्तं रसयुतं कुत्र जायते योगिनः परम् ।
तज्जयेद्ब्रह्मभावेन शमदमपरायणः ॥ ६३॥

स्वधर्मसंयुतो भूत्वा देहनिर्वाहकं चरेत् ।
देहस्य शमनं तच्च जायते स दमः स्मृतः ॥ ६४॥

विषयार्थं मनस्तस्य सङ्कल्पं यत् समाचरेत् ।
तन्नेच्छेच्चित्तमागृह्य कुर्याद्ब्रह्मपरायणम् ॥ ६५॥

अयं शमः समाख्यातस्तेन चित्तं भवेत् परम् ।
स्वाधीनं सर्वभावं च त्यक्त्वा ब्रह्मपरं भवेत् ॥ ६६॥

शनैः शनैरुपरमेद्विषयेभ्यो महात्मवान् ।
धृतिं योगमयीं धृत्वा भवेद्योगी स मानवः ॥ ६७॥

कर्ममार्गं परित्यज्य द्विविधं योगिसत्तमः ।
ध्यानयोगपरो भूत्वा तिष्ठेन्नित्यं वदामि तम् ॥ ६८॥

मनोवाणीविहीनं यद्ब्रह्म तत्र समाचरेत् ।
ध्यानं सङ्कल्पत्यागाख्यं विषयेषु निरन्तरम् ॥ ६९॥

यो यश्चित्तेन सङ्कल्पः क्रियते विषयेषु च ।
तत्तत्सङ्कल्पहीनं स कारयेद्योगतत्परः ॥ ७०॥

एवं चित्तं नरस्यैव स्वाधीनं जायते सदा ।
यदा धर्तुं स नो शक्तस्तदान्यदाचरेद्बुधः ॥ ७१॥

देहेन्द्रियाणि सङ्गृह्य तिष्ठेद्भूमौ महायशाः ।
न चलेत् स्थाणुवत् सोऽपि क्रियां नैव समाचरेत् ॥ ७२॥

तत्र यन्मिलितं चान्नं जलपानादिकं चरेत् ।
परेच्छया समायुक्तः सदा तिष्ठेन् महायशाः ॥ ७३॥

केनापि जलपानादि न दत्तं तादृशो वसेत् ।
न तदर्थं श्रमेत् सोऽपि नेच्छेत् प्रारब्धधारकः ॥ ७४॥

सर्पवृश्चिकव्याघ्राद्यैः पीडितो यदि मानवः ।
नानाप्रहारयोगैश्च मानवादिभिरेव वा ॥ ७५॥

तथापि न चलेत् सोऽपि स्वस्थानाज्जडवत्परः ।
देहप्रारब्धमाश्रित्य न तेषु क्रोधमाचरेत् ॥ ७६॥

पूर्वजन्मकृतं कर्म मया तेन प्रबोधितः ।
(Page खं. ९ अ. ९ पान ३५)
इमे सम्पीडयन्त्येवमेषां दोषो न विद्यते ॥ ७७॥

अथवा सात्त्विकैस्तत्र पूजितः सर्वभावतः ।
नित्यं नानाजनैः सोऽपि सेवितो न चलेत्तदा ॥ ७८॥

पूर्वजन्मकृतं कर्म प्रेरितास्तेन मानवाः ।
मया मां पूजयन्त्येव गुण एषां न विद्यते ॥ ७९॥

एवं मनसि सन्धार्य तेषां नेच्छेच्छुभं कदा ।
द्वन्द्वमेवं परिगृह्य तिष्ठेन्नित्यं महायशाः ॥ ८०॥

अनेन विधिना सोऽपि स्वल्पकालेन भो विधे ।
चित्तं जयेन्न सन्देहः शान्तिं पूर्णामवाप्नुयात् ॥ ८१॥

नान्यत् किञ्चिच्चरेत् कर्म न ध्यानादिकमादरात् ।
एवं शमदमौ धृत्वा भवेद्योगी स मानवः ॥ ८२॥

विचारं ब्रह्मणस्तत्र कुर्यान्नित्यं विशेषतः ।
कीदृशं ब्रह्म हृत्स्थं मे वेदाद्यैः प्रतिपादितम् ॥ ८३॥

पञ्चभूमिमतिक्रम्य तिष्ठेत् क्रमेण मानवः ।

नानाब्रह्मणि पश्यन् सन्नन्ते शान्तिमवाप्नुयात् ॥ ८४॥

शान्तियुक्तो नरः पश्चात् सन्त्यजेत्तां महाद्भुताम् ।
जडावस्थां पुनः सोऽपि यथेच्छाचारगो भवेत् ॥ ८५॥

हृदि चिन्तामणिं दृष्ट्वा पञ्चभूमिप्रचालकम् ।
शान्त्या युक्तो भवेन्नित्यं स्वाधीनहृदयः परः ॥ ८६॥

दृष्ट्वा ब्रह्म स्वयं योगी रसहीनो भवेन् मुदा ।
सर्वत्र नात्र सन्देहः शान्त्या सर्वं समाचरेत् ॥ ८७॥

अनेन विधिना दक्ष ज्ञानी पापपरायणः ।
क्रमेण साधयेद्योगं स योगी सम्भवेत् परः ॥ ८८॥

एवं कर्तुमशक्तश्चेत्तदा श्रुत्वा महामतिः ।
इमं योगं स्वयं तत्र निष्ठायुक्तो भवेत् सदा ॥ ८९॥

स्वधर्मनिरतो भूत्वा योगमिच्छेन्निरन्तरम् ।
निन्द्यभोगान् प्रभुञ्जन् सन्नन्ते स्वानन्दगो भवेत् ॥ ९०॥

गणेश्वरं तत्र दृष्ट्वा योगयुक्तो भविष्यति ।
ज्योतिर्देहधरो भूत्वा प्रभजेद्गणनायकम् ॥ ९१॥

ब्रह्म कल्पमयं स्थित्वा कालं तत्र महामतिः ।
तद्देहे लीनतां प्राप्य ब्रह्मभूतो भविष्यति ॥ ९२॥

एवं कर्तुमशक्तश्चेत्तदा स धर्मसंयुतः ।
कर्माचरेत् प्रजानाथ ब्रह्मार्पणविधानतः ॥ ९३॥

तेनैव शुक्लगत्या स ब्रह्मीभूतो नरो भवेत् ।
निःकामयोगमार्गेण सदा ब्रह्मणि तत्परः ॥ ९४॥

एवं कर्तुमशक्तश्चेत्तदाऽहं ब्रह्मभावतः ।
त्रिविधं फलमुत्सृज्य कर्मजं योगमाप्नुयात् ॥ ९५॥

कर्मत्यागबलेनैवाहं ब्रह्म निश्चयेन सः ।
क्रमेण कर्मसंयुक्तो भविष्यत्यन्यजन्मनि ॥ ९६॥

निःकामकर्मकर्ता स पुनरन्यभवे नरः ।
योगरससमायुक्तो भवेद्विषयनिन्दकः ॥ ९७॥

एवं क्रमेण शान्तिं स लभेत् पूर्णां न संशयः ।
क्रमार्थं रचितं सर्वं नानामतसमन्वितम् ॥ ९८॥

सुगमं सर्वभावेषु गणेशभजनं परम् ।
तेन योगी भवेन्नूनं सर्वशास्त्रेषु सम्मतम् ॥ ९९॥

यत्किञ्चिद् गणराजस्य व्रतपूजादिकं प्रभोः ।
कीर्तनश्रवणाद्यं तु ब्रह्मीभूतप्रदायकम् ॥ १००॥

नानाविषयसंयुक्तो नरः स्मरेद्गणाधिपम् ।
अहर्निशं तदास्यान्ते गणेशस्मरणं भवेत् ॥ १०१॥

तेन स्वानन्दगो भूत्वा योगमभ्यस्य तन्मयः ।
ब्रह्मकल्पान्तभावे स भविष्यति न संशयः ॥ १०२॥

(Page खं. ९ अ. १० पान ३६)
स्मरणं गणराजस्य प्रकुर्यान्नित्यमादरात् ।
तस्यान्ते गणराजस्य स्मृतिं दद्यान्नराय सः ॥ १०३॥

अतोऽहर्निशमेकं तं संस्मरेन् मानवः परम् ।
नानायोगादिकं सर्वं साध्य योगिसमो भवेत् ॥ १०४॥

आयासेन विहीनोऽपि सदा विषयलम्पटः ।
गणेशस्मरणे सक्तः सः शुकसमतां व्रजेत् ॥ १०५॥

शिवविष्णुमुखादीनां नरो यः स्मरणं चरेत् ।
अन्ते तेषां स्मृतिं तस्मै स दद्याच्चित्तगः प्रभुः ॥ १०६॥

तेषां लोकं समासाद्य भुक्त्वा भोगान् मनोहरान् ।
प्रपतेन्नाऽत्र सन्देहो मृत्युलोके विशेषतः ॥ १०७॥

पुराणेषु प्रपठ्यन्ते त्रिगुणानां लयाः सदा ।
अतः स जन्ममृत्युभ्यां युक्तो भवति तद्गतः ॥ १०८॥

अतः सारं समाख्यातं गणेशभजनं परम् ।
तेनाज्ञानसमायुक्तो नरो ब्रह्ममयो भवेत् ॥ १०९॥

एतत्ते कथितं दक्ष योगप्राप्त्यर्थमादरात् ।
अज्ञानसंयुतस्यापि ब्रह्मीभूतप्रदायकम् ॥ ११०॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे

नवमे खण्डे योगचरिते मुद्गलदक्षसंवादे योगामतार्थशास्त्रे
अज्ञानिनां क्रमयोगवर्णनं नाम नवमोऽध्यायः ॥ ९.९
॥ इति योगगीतासूपनिषत्सु सुगमासु पञ्चमोऽध्यायः ॥ ९(दत्तगीता).५

## ९.१० विभूतियोगो नाम दशमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
विभूतीर्वद योगीश गणेशस्य महात्मनः ।
या ज्ञात्वा ताः समाराध्य गणेशज्ञो भवेन्नरः ॥ १॥

मुद्गल उवाच ।
अपारा गणनाथस्य विभूतयो न संशयः ।
ता न शक्ताः कथयितुं भवन्ति शङ्करादयः ॥ २॥

क्षणे क्षणे गणेशानो नानाखेलपरायणः ।
विभूतिभिर्जगत्सर्वं भावयति परात्परः ॥ ३॥

लोकेषु तत्त्वमुख्येषु जगत्सु ब्रह्मसु प्रभोः ।
ये श्रेष्ठास्तस्य ते सर्वे विभूतिपदधारकाः ॥ ४॥

कल्पे कल्पे विभूतीनामवतारा असङ्ख्यकाः ।
गणेशस्य तथा दक्ष तान् वक्तुं कः क्षमो भवेत् ॥ ५॥

अतः सङ्क्षेपतस्तुभ्यं कथयिष्यामि ताः शृणु ।
विभूतीर्गणनाथस्य नानासिद्धिप्रदायिनीः ॥ ६॥

जगत्सु ब्रह्मसु प्राज्ञ योगरूपो गजाननः ।
कथं न भिन्नभावाख्यं वर्तते वर्णयाम्यहम् ॥ ७॥

मायाभ्यां संयुतः सोऽपि नानावेषप्रधारकः ।
अयोगिनामिदं हृद्यं सत्यं सम्भासते सदा ॥ ८॥

मायायुक्तप्रभावेण किं किं गजाननस्य च ।
(Page खं. ९ अ. १० पान ३७)
न सम्भवेदहं मायां समाश्रित्य वदामि ताः ॥ ९॥

कलांशाः कलया युक्ताः कलांशांशाः कलात्मकाः ।

तेषामंशधरा ये ते सर्वे विभूतिधारकाः ॥ १०॥

एवमेव गणेशानः पृष्टश्च नारदेन सः ।
जगाद ताः शृणुष्व त्वं विभूतीः परमाद्भुताः ॥ ११॥

श्रीगणेश उवाच ।
पूर्णो योगेषु सर्वेषु चित्तरोधमयः परः ।
मायाहीनप्रभावाणामयोगोऽहं महामुने ॥ १२॥

स्वानन्दो निजभूतेषु तुर्येष्वव्यक्तसंज्ञितः ।
आनन्दसमभावेषु जीवेष्वात्माहमञ्जसा ॥ १३॥

नानाभेदेषु ब्रह्माहमसद्रूपप्रधारकम् ।
सत्येषु साङ्ख्यरूपोऽहं बोधः खेलकरेषु च ॥ १४॥

देहाभिमानयुक्तेषु सदैकोऽहं महामते ।
देहेषु बिन्दुरूपोऽहं चेतनासु गुणेश्वरः ॥ १५॥

कोशेष्वानन्दकोशोऽहं विज्ञानं सूक्ष्मजातिषु ।
विवेकेषु मनश्चाहं चालकेषु समीरणः ॥ १६॥

स्थूलेष्वन्नस्वरूपोऽहं समष्टिषु तथेश्वरः ।
व्यष्टिषु प्राज्ञरूपोऽहमणुषु च महाविराट् ॥ १७॥

इन्द्रियेषु मनश्चाहं भूतेष्वाकाशसंज्ञितः ।
तन्मात्राणामहं शब्दो ज्ञाताहं देवतासु च ॥ १८॥

तत्त्वेषु विविधेष्वेव महत्तत्त्वमहं परम् ।
गुणेषु गुणपोऽहं तु पालकेषु जनार्दनः ॥ १९॥

हरः संहारकर्तॄणां स्रष्टॄणां प्रपितामहः ।
कर्मणामर्यमाऽऽत्माऽहं मोहकानां च शक्तिका ॥ २०॥

देवानां मघवाऽहं तु आदित्यानां विनायकः ।
तेजसां भानुरूपोऽहममृतेषु विधुः परः ॥ २१॥

अग्निः प्रतापदेष्वेव धर्मः समप्रवृत्तिषु ।
यमो यमवतां चाहं रक्षसां निर्ऋतिः स्वयम् ॥ २२॥

जलेषु वरुणोऽहं तु बलवत्सु समीरणः ।
निधीनां धनदाताऽहं रुद्राणां शङ्करः प्रभुः ॥ २३॥

कामो धनुर्धराणां च रतिर्भोगेषु भोगदा ।
नागेशानामहं शेषः सर्पाणां तक्षकः स्वयम् ॥ २४॥

नागानां वासुकिर्नाम जम्बुद्वीपेषु सर्वदः ।
स्वादूदकः समुद्राणां पर्वतेषु हि मेरुकः ॥ २५॥

पितृणां यमरूपोऽहं वृक्षेषु शमिका मता ।
देववृक्षेषु मन्दारस्तरूणां कामदायकः ॥ २६॥

धेनूनां कामधेनुर्या दूर्वा चौषधिषु प्रभुः ।
पक्षिषु तु मयूरोऽहं मृगाणां सिंहरूपधृक् ॥ २७॥

मासानां श्रावणश्चाहं चौराणां मूषकाधिपः ।
वाहनेष्वश्ववाहोऽहं सिद्धिरैश्वर्यदेषु च ॥ २८॥

विद्यासु बुद्धिरूपोऽहं चित्तं प्रकाशकारिणाम् ।
अहं मनश्च वेगानां मोहदेष्वभिमानकः ॥ २९॥

नराधिपो नराणां तु वर्णेषु ब्राह्मणोह्यहम् ।
आश्रमेषु तुरीयोऽहं पोषकेषु गृहस्थकः ॥ ३०॥

त्यागिनामवधूतोऽहं तिथीनां च चतुर्थिका ।
प्रजापतिषु दक्षोऽहं ब्रह्मर्षिषु भृगुस्तथा ॥ ३१॥

नारदो दैवतर्षीणां दत्तोऽवधूतरूपिणाम् ।
कपिलस्तत्त्वविज्ञानां योगिनां शुक एव यः ॥ ३२॥

जनकोऽहं विदेहानां निःसङ्गेषु महामुने ।
सनकादय एवाऽहं ज्ञानिनां बादरायणः ॥ ३३॥

वसिष्ठः कर्मकर्तॄणां गाणपत्येषु मुद्गलः ।
भृशुण्डी चैकनिष्ठेषु ब्रह्मिष्ठानां बृहस्पतिः ॥ ३४॥

अन्नानां तिलरूपोऽहं गव्यानां घृतमञ्जसा ।
मधु सर्वरसानां च मकरो जलजात्मनाम् ॥ ३५॥

कौमण्डली नदीनां च तीर्थेषु गाणपं परम् ।
क्षेत्राणां मयूरक्षेत्रं काशिराजः सुबुद्धिषु ॥ ३६॥

मयूरेशोऽवताराणां गार्ग्य उपासकात्मनाम् ।

ध्याननिष्ठेषु सर्वेषु गृत्समदोऽहमेव च ॥ ३७॥

सुबोधौ दैत्यजातीनां ज्ञानारिर्द्वेषकारिणाम् ।
दुर्जयेषु मनश्चाहं वर्णेष्वोङ्कार एव सः ॥ ३८॥

शुक्रोहं भाविकेष्वेव त्रिशिराः शुद्धचेतसाम् ।
उपदेशप्रदातॄणां याज्ञवल्क्यः प्रतापवान् ॥ ३९॥

पौराणिकेषु सूतोऽहं श्रोतॄणां शौनको मुनिः ।
सेनानीनामहं स्कन्दो विष्णुर्यशस्विनामहम् ॥ ४०॥

पापेष्वनृतरूपोऽहं कलहो भेदधारिणाम् ।
प्राप्तिषु लोभरूपोऽहं मणीनां चिन्तितार्थदः ॥ ४१॥

ज्ञानं पवित्रं भावानां सामगायकधर्मिणाम् ।
वेदेष्वथर्वसंज्ञोऽहं शस्त्रेषु परशुः परः ॥ ४२॥

निर्लेपानामहं साक्षी राजश्रीषु गजस्तथा ।
विषयो भ्रान्तिदानां च रम्भा ह्यप्सरसामहम् ॥ ४३॥

गन्धर्वाणां चित्ररथो वैद्यानां वैद्यनायकः ।
धन्वन्तरिस्तु भिषजां समुद्रः सरसात्मनाम् ॥ ४४॥

स्रोतसां जाह्नवी विप्र मन्त्राणामेकवर्णजः ।
सूक्तेषु ब्राह्मणस्पत्यं यज्ञेषु ज्ञानरूपधृक् ॥ ४२॥

प्राणेषु तु समानोऽहं शक्तिः शक्तिमतामहम् ।
बृहदारण्यकं विद्धि नानोपनिषदां परम् ॥ ४६॥

शास्त्रेषु योगशास्त्रं च पुराणेषु च मौद्गलम् ।
अरण्यानां महारण्यं दण्डकाख्यमहं परम् ॥ ४७॥

नियन्तॄणामहं दण्डो मायाऽहं भावकारिणाम् ।
स्मृतीनां याज्ञवल्क्यस्य स्मृतिरेव परा मता ॥ ४८॥

गायत्री छन्दसां विप्र स्वानन्दो नगरात्मनाम् ।
व्याकरणमङ्गभूतेषु कलासु योगदा ह्यहम् ॥ ४९॥

नीतिज्ञेषु तथा काव्यो वृषभो भूमिधारिणाम् ।
नन्दिकेशो गवां चाहं नग्नो भैरवभाविनाम् ॥ ५०॥

एवं नानाविधाऽऽकारा विभूतीर्गणपस्य या ।
कथितुं नैव शक्या सा सारा सङ्कथिता मया ॥ ५१॥

यद्यच्छ्रेष्ठतमं विप्र सा विभूतिर्न संशयः ।
लोकेषु गणराजस्य तां भावय विशेषतः ॥ ५२॥

मुद्गल उवाच ।
एवमुक्त्वा गणेशानो विरराम प्रजापते ।
नारदस्तं प्रणम्यैव जगाम तादृशोऽभवत् ॥ ५३॥

य इमां श्रावयेद्दक्ष शृणुयाद्वा प्रयत्नतः ।
न मोहं स लभेत् क्वापि ज्ञात्वा सामर्थ्यजं महः ॥ ५४॥

अपारमहिमायुक्ता जीवाश्च परमेश्वराः ।
ते सर्वे विघ्नराजस्य विभूतिपदधारकाः ॥ ५५॥

एवं ज्ञात्वा गणेशानं ये भजन्ति मनीषिणः ।
ते सर्वे ब्रह्मभूताश्च भविष्यन्ति प्रजापते ॥ ५६॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
नवमे खण्डे योगचरिते मुद्गलदक्षसंवादे योगामृतार्थशास्त्रे
चित्तभूमिनिरोधेन विभूतियोगो नाम दशमोऽध्यायः ॥ ९.१०
॥ इति योगगीतासूपनिषत्सु सुगमासु षष्ठोऽध्यायः ॥ ९(दत्तगीता).६
(Page खं. ९ अ. ११ पान ३९)

## ९.११ तत्त्वविचारयोगो नाम एकादशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
त्वया प्रोक्तः पुरा विप्र विचारो ब्रह्मणः परः ।
तं कृत्वा योगमाप्नोति तद्वदस्व हितावहम् ॥ १॥

क्रियया शुद्धचित्तो यो नरो ब्रह्मपरायणः ।
सर्वत्र ब्रह्मरूपं यद्विधिना केन पश्यति ॥ २॥

मुद्गल उवाच ।
बाह्यान्तरां क्रियां कृत्वा शुद्धचित्तो नरोत्तमः ।

तत्त्वविचारमार्गेण पश्यति ब्रह्म शाश्वतम् ॥ ३॥

तत्तेऽहं कथयिष्यामि तत्त्वज्ञानं प्रजापते ।
आदौ योगिजनानां यत् साधनं योगदायकम् ॥ ४॥

पृथ्वी जलं तथा तेजो वायुराकाशमेव यत् ।
पञ्चभूतमयो देहः प्रकृतिः सा च पञ्चधा ॥ ५॥

क्रियारूपा महाभागा नानाभेदपरायणा ।
विभज्यात्मानमेवं सा क्रीडति विविधे रता ॥ ६॥

भूतानामेकभावाख्या पञ्चानां ज्ञानरूपिणी ।
प्रकृतिर्हृदि संस्था सा जीवभावधरा परा ॥ ७॥

तया ज्ञानं भवेत् सर्वं नानाविवेकदायकम् ।
तदाधारं जगत् सर्वमेकरूपा प्रकीर्तिता ॥ ८॥

तयोर्योगे प्रजानाथ ब्रह्मैवमभिधीयते ।
क्रियाज्ञानस्वरूपाख्यं द्वन्द्वहीनं परात्परम् ॥ ९॥

तदेव पञ्चधा जातं शृणु तद्योगदायकम् ।
स्थूलं सूक्ष्मं समं चात्मप्रतीतं बिन्दुसंज्ञितम् ॥ १०॥

समष्टिव्यष्टिभावेन द्विविधं ब्रह्म कथ्यते ।
पृथक्त्वेन स्वयं भाति पञ्चसु पञ्चभेदतः ॥ ११॥

स्थूलं जागृन्मयं ब्रह्म तदेव द्विविधं मतम् ।
विश्वाख्यं व्यष्टिरूपेण वैश्वानरं समष्टिगम् ॥ १२॥

अण्डेषु विविधा रूपा जन्तवो दृष्टिगोचराः ।
जागृद्भावधराः सर्वे विश्वात्मका उदाहृताः ॥ १३॥

तस्य बोधं प्रवक्ष्यामि सुगमार्थप्रकाशकम् ।
क्रियात्मकेषु देहेषु क्रियारूपा भवन्ति ते ॥ १४॥

ज्ञानात्मकेषु देहेषु ज्ञानरूपधरा मताः ।
उभयोर्योगभावेन विश्वाख्यास्ते प्रकीर्तिताः ॥ १५॥

बाह्यदेहस्य भो दक्ष वितस्तिर्यादृशी भवेत् ।
तावन्मानेन सर्वेषां ज्ञानदेहो हृदि स्थितः ॥ १६॥

विराट् जागृत् स्वरूपस्थो वैश्वानर इति स्मृतः ।
व्यापकात्मकदेहेन तिष्ठति विश्वभाविषु ॥ १७॥

तस्यापि द्विविधो देहः क्रियाज्ञानप्रभेदतः ।
तयोर्योगे समाख्यातो वैश्वानरश्च तन्मयः ॥ १८॥

विश्ववैश्वानरयोश्च योगे ब्रह्म प्रकीर्तितम् ।
जागृद्भावधरं पूर्णं स्थूलभूतप्रकाशकम् ॥ १९॥

एतत् स्थूलस्य तत्त्वं ते कथितं तु समासतः ।
तत्र तत्त्वविधिं भिन्नं शृणु योगसमाधिदम् ॥ २०॥

जन्ममृत्युयुतं यच्च नानाभावपरायणम् ।
त्वम्पदाख्यं प्रजानाथ विद्धि तत् सर्वभावगम् ॥ २१॥

जन्ममृत्युविहीनं यदेकरूपं प्रकीर्तितम् ।
तत्पदाख्यं च तद्विद्धि परं सर्वात्मधारकम् ॥ २२॥

तयोर्योगे भवेत्तत्वं तदेवासिपदं परम् ।
द्वन्द्वभावविहीनं यद् द्वन्द्वरूपप्रकाशकम् ॥ २३॥

त्वम्पदं क्रियया युक्तं ज्ञानाख्यं तत्पदं भवेत् ।
तयोर्योगे भवेद्विश्वं तत्त्वरूपं न संशयः ॥ २४॥

एवं वैश्वानराख्यं त्वं जानीहि तत्त्वसंज्ञितम् ।
क्रियाज्ञानसमायोगे तयोः प्रकाशकारकम् ॥ २५॥

अथान्यच्छृणु दक्ष त्वं तत्त्वरूपं पुरातनम् ।
विश्वाख्या जन्तवः सर्वे नानाभावात्मका बुधैः ॥ २६॥

जन्ममृत्युयुताः प्रोक्तास्त्वम्पदधारका मताः ।
वैश्वानरस्त्वम्पदश्चैकरूपाद्व्यापको मतः ॥ २७॥

तयोरभेदभावे यद्ब्रह्मतत्त्वं प्रकीर्त्यते ।
जागृद्भावधरं पूर्णं स्थूलभावपरायणम् ॥ २८॥

एवं नानाविभागेषु ज्ञातव्यं तत्त्वरूपकम् ।
सूक्ष्मादिषु प्रजानाथ ब्रह्मसौख्यप्रदायकम् ॥ २९॥

अथ सूक्ष्मं प्रवक्ष्यामि योगमार्गप्रसिद्धये ।
शुद्धचित्तप्रभावेण तज्ज्ञानं तन्मयं भवेत् ॥ ३०॥

बाह्यं स्थूलं विशेषेण जागृदन्नमयं परम् ।
आन्तरं स्वप्नभावाख्यं सूक्ष्मं जानीहि मानद ॥ ३१॥

प्राणो दशविधः प्रोक्तः सूक्ष्मरूपोंऽतरे स्थितः ।
तस्मात् सूक्ष्मं मनः प्रोक्तं प्राणान्तः संव्यवस्थितम् ॥ ३२॥

तस्मात् सूक्ष्मं च विज्ञानं देहद्वन्द्वज्ञमुत्तमम् ।
मनोंऽतरे स्थितं पूर्णं तदन्तर्न च विद्यते ॥ ३३॥

त्रिविधं कोशसंयुक्तं स्वप्नं सूक्ष्मस्वरूपकम् ।
सर्वान्तरे स्थितं ब्रह्म द्वन्द्वमायाप्रचालकम् ॥ ३४॥

क्रियारूपस्तथा देहः सूक्ष्मभूतमयः स्मृतः ।
सर्वान्तरे समास्थाय कल्पिताभोगकारकः ॥ ३५॥

ज्ञानदेहः समाख्यातः सदैकभावधारकः ।
पूर्ववत् सर्वं विज्ञेयं सूक्ष्ममायाप्रकाशकम् ॥ ३६॥

भिन्नभावधराः सर्वे जन्तवः स्वप्नगाः पराः ।
तैजसास्ते मताः शास्त्रे क्रियाज्ञानप्रकाशकाः ॥ ३७॥

विराट् तत्र समाख्यातो हिरण्यगर्भसंज्ञितः ।
व्यापकः स्वप्नभावेषु नानाजन्तुप्रचालकः ॥ ३८॥

तयोरभेदभावे यद्ब्रह्म स्वप्नात्मकं परम् ।
सूक्ष्ममायाप्रकाशत्वात् सूक्ष्मं तत् कथ्यते बुधैः ॥ ३९॥

पूर्ववत्तत्त्वभावश्च विज्ञेयः सूक्ष्मगः परः ।
शुद्धचित्तप्रभावेण साक्षात्कारं करोति सः ॥ ४०॥

अतः परं समाख्यं यद्ब्रह्म सुषुप्तिसंज्ञितम् ।
कथयामि महाप्रीत्या लोकानामुपकारकम् ॥ ४१॥

बाह्यं जागृन्मयं दक्ष वपुः सर्वत्र पठ्यते ।
आन्तरं स्वप्नमित्युक्तं तयोर्योगे समात्मकम् ॥ ४२॥

बाह्यान्तरैकभावाख्यं बाह्यान्तरविवर्जितम् ।
आनन्दकोशगं साम्यं कृतं भूतैर्गुणात्मकैः ॥ ४३॥

जागृत्त्यक्त्वा नरो यस्तु स्वप्नं गच्छति तत्र सः ।

तयोः सन्धिं समाश्रित्य सुषुप्तिर्जायते परा ॥ ४४॥

तथा स्वप्नं परित्यज्य जागृतिं गच्छति स्वयम् ।
तयोः सन्धिं समास्थाय तिष्ठति सा सुषुप्तिका ॥ ४५॥

यत्र सुप्तो नरो दक्ष ज्ञानयुक्तो भवत्यसौ ।
न जानाति स्वकं चान्यं स्वप्नं नैव प्रपश्यति ॥ ४६॥

सा सुषुप्तिः समाख्याता निद्रां संश्रित्य तिष्ठति ।
जागृतिस्वप्नबोधं या करोति सा सुषुप्तिका ॥ ४७॥

सा द्विधा मायया युक्ता प्राज्ञेश्वरस्वभावतः ।
भिन्नदेहधराणां तु प्रज्ञाख्या सा प्रकीर्तिता ॥ ४८॥

विराड्रूपधरा नित्या सेश्वराख्या प्रकथ्यते ।
ब्रह्मरूपा तयोर्योगे तत्त्वसंज्ञा यथा पुरा ॥ ४९॥

अथ तुरीयरूपं ते कथयामि समासतः ।
नादरूपधरं भूततन्मात्राभेदमञ्जसा ॥ ५०॥

व्यवस्थासंश्रितं पूर्णं त्रिषु साक्षिवदुच्यते ।
तस्यानुभवमाहात्म्यं कथयामि हिताय ते ॥ ५१॥

मया जागृन्मयं भुक्तं मया स्वप्नं विलोकितम् ।
निद्रायां न मया किञ्चिज्ज्ञातं वदति यः स वै ॥ ५२॥

(Page खं. ९ अ. ११ पान ४१)
यदा जागर्ति विश्वस्थस्तदा द्वाभ्यां विवर्जितः ।
यदा स्वपिति स द्वाभ्यां हीनस्तिष्ठति निश्चितम् ॥ ५३॥

यदा सुषुप्तिसंस्थोऽयं तदा द्वाभ्यां विवर्जितः ।
एवं भेदप्रकारैः स व्यवस्थासंयुतो मतः ॥ ५४॥

तस्य तत्त्वं प्रवक्ष्यामि वैश्वतैजसप्राज्ञगः ।
त्वम्पदाख्यः समाख्यातो नादरूपधरः प्रभुः ॥ ५५॥

त्रिविराण्मय एवासौ तत्पदाख्यः प्रकीर्त्यते ।
तयोरभेदभावे स तत्त्वरूपोऽस्मितामयः ॥ ५६॥

अवस्थानां समायोगो नादस्तुरीयधारकः ।
सदैकभावसंयुक्तः सर्वत्राऽसौ विराजति ॥ ५७॥

न बाह्यो नांऽऽतरस्थोऽयं नोभयात्मक उच्यते ।
अहमित्येव कोशात्माऽस्मिताख्यः परमेश्वरः ॥ ५८॥

अतः परं प्रवक्ष्यामि बिन्दुतत्त्वं सुसौख्यदम् ।
पञ्चमं ब्रह्मसंज्ञं तत् देहानां देहगं परम् ॥ ५९॥

व्यवस्थामयसंस्थं यत्त्वम्पदस्थं प्रकथ्यते ।
तुरीयसंज्ञितं देहं तत्पदाख्यं प्रकीर्तितम् ॥ ६०॥

तयोरभेदभावे यत्तत्त्वं योगमयं परम् ।
चतुर्षु संस्थितं पूर्णं चतुर्भिर्वर्जितं सदा ॥ ६१॥

एवं तत्त्वविचारेण शमदमपरायणः ।
सङ्कल्पजान् सदा कामांस्त्यक्त्वा योगमयो भवेत् ॥ ६२॥

सर्वत्र ब्रह्मसंस्थं यत् पश्येत्तन्नात्र संशयः ।
तत्त्वरूपधरं पूर्णं तत्त्वविचारतः सदा ॥ ६३॥

अथान्यत्तत्त्वमार्गं ते कथयिष्यामि सर्वदम् ।
बिन्दुस्त्वम्पदसंज्ञस्थः सोऽहं तत्पदगं मतम् ॥ ६४॥

तयोर्योगे प्रजानाथ बोधस्तत्त्वमयः स्मृतः ।
मनोवाणीविहीनत्वात् दृश्यते योगिना परः ॥ ६५॥

बोधस्त्वम्पदरूपश्च विबोधस्तत्पदात्मकः ।
तयोर्योगे स्वसंवेद्यं तत्त्वं वेदे प्रकीर्तितम् ॥ ६६॥

असत्त्वम्पदरूपं सत्तत्पदस्थमुदुच्यते ।
तयोर्योगे समं ब्रह्म तत्त्वं योगप्रदं मतम् ॥ ६७॥

समं त्वम्पदसंज्ञस्थमव्यक्तं तत्पदस्थितम् ।
तयोर्योगे तथा तत्त्वं स्वानन्दाख्यं प्रकीर्तितम् ॥ ६८॥

स्वानन्दस्त्वम्पदाख्यश्चायोगस्तत्पदमुच्यते ।
तयोर्योगे परं तत्त्वं पूर्णयोगमयं मतम् ॥ ६९॥

सिद्धिस्त्वम्पदगा प्रोक्ता बुद्धिस्तत्पदगा मता ।
तयोर्योगे गणेशानस्तत्त्वरूपः प्रकथ्यते ॥ ७०॥

एवं नानामतैर्युक्ता वेदान्तार्थविचक्षणाः ।

तत्त्वं वदन्ति दक्ष त्वं जानीहि नात्र संशयः ॥ ७१॥

अनन्तभावसंयुक्तं त्वम्पदं विद्धि सर्वदा ।
अकल्पितं तत्पदाख्यं तयोर्योगे परं भवेत् ॥ ७२॥

इदं सारं रहस्यं ते कथितं योगदं परम् ।
येन सर्वत्र योगं स सम्पश्येज्ज्ञानचक्षुषा ॥ ७३॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
नवमे खण्डे योगचरिते मुद्गलदक्षसंवादे योगामृतार्थशास्त्रे
चित्तभूमिनिरोधेन तत्त्वविचारयोगो नाम एकादशोऽध्यायः ॥ ९.११
॥ इति योगगीतासूपनिषत्सु सुगमासु सप्तमोऽध्यायः ॥ ९(दत्तगीता).७

## ९.१२ शुक्लकृष्णगतियोगो नाम द्वादशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
शुक्लां कृष्णां गतिं ब्रूहि याभ्यां मुक्तिमवाप्नुयात् ।
संसारं च तथा योगिन् दयया सर्वतारक ॥ १॥

मुद्गल उवाच ।
कर्मत्वं त्रिविधं विद्धि कर्माकर्मविकर्मगम् ।
स्वधर्मवर्जितं सर्वं कर्म विकर्मसंज्ञकम् ॥ २॥

स्वधर्मसंयुतं कर्म भोगवासनया युतम् ।
कर्मसंज्ञं विजानीहि कृष्णगतिपदप्रदम् ॥ ३॥

ब्रह्मार्पणतया कर्म स्वधर्मस्थं भवेत् परम् ।
शुक्लगतिमयं विद्धि मुक्तिदं तदकर्मकम् ॥ ४॥

आग्नेयं ज्योतिरयनमुत्तराख्यं दिवा तथा ।
शुक्लगतिमयं सर्वं जानीहि मुक्तिदायकम् ॥ ५॥

चान्द्रं ज्योतिर्धूमरात्री दक्षिणायनमेव यत् ।
कृष्णगतिस्वरूपं तज्जानीहि जनिमृत्युदम् ॥ ६॥

तयोर्भेदं प्रवक्ष्यामि लोकानां हितकाम्यया ।
येन द्वैधं परित्यज्य ब्रह्मणि निरतो भवेत् ॥ ७॥

निःकामिकं कर्म कृत्वा मृतो नरो यदा भवेत् ।
रात्रौ स दक्षिणार्के वा न तं गृह्णन्ति देवताः ॥ ८॥

देवभोगांस्तिरस्कृत्य ब्रह्मार्पणपरायणम् ।
नरं तं किं करिष्यन्ति देवाः स्वर्गसुखप्रदाः ॥ ९॥

अतो दाहे स वै दक्ष अग्निज्योतिःस्थगो भवेत् ।
दिवसे समनुप्राप्ते दिवा दैवतगस्तथा ॥ १०॥

उत्तरायणसम्भूते स गच्छेद्भानुमण्डले ।
प्रलये मण्डलस्यैव नाशे पुरुषगो भवेत् ॥ ११॥

महाप्रलयवेलायां प्रकृतेः पुरुषस्य च ।
नाशे ब्रह्मणि गच्छेत् स ब्रह्मभूतो भवेत्ततः ॥ १२॥

सकामकं कर्म कृत्वा दिवसे उत्तरायणे ।
मृतं नरं न तं भानुर्गृह्णाति कामनायुतम् ॥ १३॥

सदाघे धूमसंस्थश्च यदा रात्रिः समागता ।
तदा तस्यां समाश्रित्य तथा तिष्ठेत् प्रजापते ॥ १४॥

दक्षिणायनमानन्दादागतं वीक्ष्य तत्क्षणात् ।
विमानवरमारुह्य गच्छेत् स्वर्गं विहायसा ॥ १५॥

चान्द्रं ज्योतिः समाश्रित्य भोगान् भुङ्क्ते स्वकर्मजान् ।
कर्मप्रमाणमार्गेण नानास्वर्गपरायणः ॥ १६॥

विधिं तत्र प्रवक्ष्यामि चन्द्रकलासमुद्भवम् ।
अमृतं देवलोकेषु स्वर्गेषु भोगदं परम् ॥ १७॥

इह कर्म कृतं पूर्णं नरैस्तदमृतात्मकम् ।
भवति चन्द्रगं सर्वं तेन कलायुतो भवेत् ॥ १८॥

शुक्लपक्षे क्रमेणायमेकैककलया प्रभुः ।
वृद्धियुक्तः स्वयम्पूर्णः पूर्णिमायां प्रदृश्यते ॥ १९॥

कृष्णपक्षे सुराः सर्वे क्रमेणामृतभोजिनः ।
पिबन्ति चन्द्रसंस्थं तदमृतं तृप्तिकारकम् ॥ २०॥

तेन तृप्तियुताः सर्वे भवन्ति मासमानतः ।
अमायां पतितश्चन्द्र ओषधीषु न संशयः ॥ २१॥

अत ओषधयश्छेद्या नरेण नैव निश्चितम् ।
अमायां चन्द्रसंयोगयुक्ताः सुखपरायणाः ॥ २२॥

अतश्चन्द्रभवं सर्वममृतं देवभूमिषु ।
चान्द्रः स्वर्ग इति प्रोक्तस्तेनैवं वेदवादिभिः ॥ २३॥

देवानां विविधानां स कर्म कृत्वा सकामकम् ।
कर्माङ्गदेवमभ्यर्च्य गच्छेत् समर्प्य तत्क्रियाम् ॥ २४॥

तत्तल्लोकसुखं भुक्त्वा नानाभोगसमन्वितम् ।
भोगान्ते पुनरेवाऽसौ मेघमण्डलगो भवेत् ॥ २५॥

तत्र जलमयो भूत्वा पतेद् वृष्ट्या स भूमिषु ।
(Page खं. ९ अ. १२ पान ४३)
तत ओषधिगो भूत्वा भवेदन्नमयस्ततः ॥ २६॥

ततो वीर्यं समाश्रित्य गच्छेत् स जठरे स्त्रियः ।
तत्र तत्त्वानि तं दक्ष आविशन्ति न संशयः ॥ २७॥

क्षेत्रज्ञः संस्थितस्तत्र तत्त्वैः क्षेत्रं विनिर्ममे ।
विधिं तस्य प्रवक्ष्यामि गर्भोपनिषदि भवम् ॥ २८॥

तत्रैकदिवसेनैव स्त्रीवीर्ये रक्तसंश्रिते ।
तस्मिन् सम्मिलनं कृत्वा तदाकारो भवेन्नरः ॥ २९॥

ततस्त्रिदिवसैः सोऽपि फेनरूपो भवेन्नरः ।
बुद्बुदः पञ्चदिवसैः पेशी सप्तदिनैस्तथा ॥ ३०॥

ततश्चतुर्दशैः सोऽपि दिवसैः फुल्लतां गतः ।
पञ्चविंशतिभिस्तत्र मांसरूपो भवेत् स्वयम् ॥ ३१॥

मासेन कठिनत्वं स प्रगच्छेत्तत्र संस्थितः ।
द्विमासाभ्यां शिरो युक्तो भवेत्तत्र प्रजापते ॥ ३२॥

त्रिमासैः कण्ठसंयुक्तश्चतुर्मासैस्त्वचा युतः ।
पञ्चमासैर्भवेज्जन्तुरिन्द्रियैः संयुतः क्रमात् ॥ ३३॥

अवयवादिसंयुक्तो नखरोमसमन्वितः ।
भवेन् मुखेन संयुक्तो मासैः षड्भिर्न संशयः ॥ ३४॥

तत इन्द्रियसम्भूतं ज्ञानं भवेत् क्रमेण वै ।
षण्मासैः परिपूर्णैश्चाऽऽकृतिः पूर्णा भवेत् परा ॥ ३५॥

पूर्वकर्मानुसारेण यादृशी योनिराभवेत् ।
तादृशाकृतिसंयुक्त इन्द्रियैश्च समन्वितः ॥ ३६॥

सप्तमासैर्भवेज्जन्तुश्चेतनया समन्वितः ।
उदरे प्रचरेत् सोऽपि मातुर्दुःखसमन्वितः ॥ ३७॥

अवकाशविहीनः स पीडितो जन्तुभिः सदा ।
मूर्च्छां गच्छेत् पुनः संज्ञां कोमलोऽतीव मानवः ॥ ३८॥

अष्टमासैस्ततस्तत्र बुद्धियुक्तो भवेन्नरः ।
साङ्ख्ययोगपरो भूत्वा ध्यायेद्ब्रह्म सनातनम् ॥ ३९॥

अतिसङ्कोचभावेन पीडितो जन्तुभिस्तथा ।
मातुर्भक्ष्यान्नदोषैः स वेदनासंयुतो भवेत् ॥ ४०॥

गर्भदुःखं स विज्ञाय तन्निवृत्त्यर्थमादरात् ।
साङ्ख्ययोगपरो भूत्वा भजेत्तं गणनायकम् ॥ ४१॥

ततस्तत्र भवेत्तस्य ज्ञानं परमसौख्यदम् ।
तेनानन्तभवानां स दृष्ट्वा दुःखं निवृत्तिगः ॥ ४२॥

अनन्यमनसा देवं स्तुयात् स्तोत्रैर्महामतिः ।
गर्भवासप्रशान्त्यर्थं ब्रह्म भूयार्थमादरात् ॥ ४३॥

गर्भ उवाच ।
नमस्ते गणनाथाय ब्रह्मणे ब्रह्मरूपिणे ।
अनाथानां प्रणाथाय विघ्नेशाय नमो नमः ॥ ४४॥

ज्येष्ठराजाय देवाय देवदेवेशमूर्तये ।
अनादये परेशाय चादिपूज्याय ते नमः ॥ ४५॥

सर्वपूज्याय सर्वेषां सर्वरूपाय ते नमः ।
सर्वादये परब्रह्मन् सर्वेशाय नमो नमः ॥ ४६॥

गजाकारस्वरूपाय गजाकारमयाय ते ।
गजमस्तकधाराय गजेशाय नमो नमः ॥ ४७॥

आदिमध्यान्तभावाय स्वानन्दपतये नमः ।

आदिमध्यान्तहीनाय त्वादिमध्यान्तगाय ते ॥ ४८॥

सिद्धिबुद्धिप्रदात्रे च सिद्धिबुद्धिविहारिणे ।
सिद्धिबुद्धिमयायैव ब्रह्मेशाय नमो नमः ॥ ४९॥

शिवाय शक्तये चैव विष्णवे भानुरूपिणे ।
मायिनां मायया नाथ मोहदाय नमो नमः ॥ ५०॥

किं स्तौमि त्वां गणाधीश यत्र वेदादयोऽपरे ।
योगिनः शान्तिमापन्ना अतस्त्वां प्रणमाम्यहम् ॥ ५१॥

रक्ष मां गर्भदुःखात्त्वं त्वामेव शरणागतम् ।
जन्ममृत्युविहीनं वै कुरुष्व ते पदप्रियम् ॥ ५२॥

एवं संस्तुतवन्तं तं नवमासादनन्तरम् ।
प्रसूतिजो महावायुर्बहिः कुर्यान्नरं क्षणात् ॥ ५३॥

वायुना चालितः सोऽपि मुमूर्च्छ दुःखसंयुतः ।
सङ्कीर्णाङ्गः पतेज्जन्तुर्धरण्यां योनिमार्गतः ॥ ५४॥

भवेत् स सावधानोऽत्र विस्मृतो ज्ञानमुत्तमम् ।
बालभावधरः कुर्याद्रोदनं धरणीतले ॥ ५५॥

फलहीनं भवेत् सर्वं गर्भागारकृतं महत् ।
ज्ञानादिकमतो भूमौ साधयेत् सर्वमञ्जसा ॥ ५६॥

न साधितं नरेणात्र कर्मभूमौ प्रजापते ।
ज्ञानादिकं तदा सोऽपि गर्भजं दुःखमश्नुते ॥ ५७॥

एवं कृष्णा गतिश्चैव कथिता ते विशेषतः ।
जन्ममृत्युकरी जन्तोः सुखदुःखप्रदायिनी ॥ ५८॥

इदं गर्भकृतं स्तोत्रं यः पठिष्यति मानवः ।
स भुक्त्वा सकलान् भोगानन्ते स्वानन्दगो भवेत् ॥ ५९॥

न कदाचिल्लभेत् सोऽपि गर्भवासं प्रजापते ।
अतो विशेषतो जन्तुर्निरन्तरमिदं जपेत् ॥ ६०॥

अधुना कथयिष्यामि ह्यन्यमर्थं सुखप्रदम् ।
शुक्लकृष्णगतिसंस्थं येन ज्ञानं तयोर्भवेत् ॥ ६१॥

भुक्तिमुक्तिप्रलोभार्थं नरः कुर्यान्निरन्तरम् ।
कर्म स्वधर्मसंयुक्तो नानादैवं स योगवित् ॥ ६२॥

उत्तरायणगे भानौ दिवसे वा मृतो भवेत् ।
स चाग्निलोकमासाद्य तपोयुक्तो भवेत् सदा ॥ ६३॥

तत्र भोगेप्सुतां ज्वाल्य गच्छेच्छक्तिं महामतिः ।
तत्राभिमानमुत्सृज्य गच्छेत् दिवं दिवाकरम् ॥ ६४॥

अतिध्यानेन संयुक्तस्तत्रात्मानं स चिन्तयेत् ।
अन्तरात्मानमुत्सृज्य गच्छेद्विकुण्ठमेव च ॥ ६५॥

तत्रानन्दं परित्यज्य शिवं गच्छेन्न संशयः ।
तत्र साक्षित्वमुत्सृज्य गच्छेत् स्वानन्दमञ्जसा ॥ ६६॥

तत्र गणेश्वरं दृष्ट्वा ब्रह्मीभूतो नरो भवेत् ।
शुक्लगतिप्रभावेण कथितं ते प्रजापते ॥ ६७॥

यदा दक्षिणगे भानौ रात्रौ वा स मृतो भवेत् ।
भुक्तिमुक्तिपरः सोऽपि गच्छेत् स्वर्गं ततो नरः ॥ ६८॥

नानास्वर्गफलं भुक्त्वा स्वकर्मनिर्मितं नरः ।
पुनः पतेद्विधे भूमौ तत्र मोक्षरुचिर्भवेत् ॥ ६९॥

ततः शुक्लां समाश्रित्य मोक्षं गच्छेत् स योगवित् ।
एवं जानीहि भो दक्ष गत्योर्मार्गं पुरातनम् ॥ ७०॥

यदैकदेवतां श्रित्वा तद्भक्तस्तत्परः सदा ।
उपासनाविधानेन स्वधर्मस्थो भजेत् स ताम् ॥ ७१॥

स मृतः स्वेष्टदेवस्य लोकं गच्छेन्न संशयः ।
तत्क्षणाच्चन्द्रसूर्याख्यौ मार्गौ नैव प्रकीर्तितौ ॥ ७२॥

तत्र भोगान् प्रभुञ्जानः स पतेदिह निश्चितम् ।
त्रिगुणात्ममया देवास्तेषां नाशे प्रजापते ॥ ७३॥

यदा गणेश्वरं सोऽपि भजेदत्रैव मानवः ।
अन्ते स्वानन्दगो भूत्वा ब्रह्मीभूतो भविष्यति ॥ ७४॥

स्वानन्दो नाशहीनश्च सदा ब्रह्मसुखप्रदः ।
अतः स्वानन्दमाश्रित्य ब्रह्मीभूतो भविष्यति ॥ ७५॥

मरणे दाघहीनश्चेत्तेजस्तत्त्वं समाश्रितः ।
अथवा धूम्रतत्त्वं स शुक्लकृष्णगतिश्रितः ॥ ७६॥

पूर्ववत् सर्वमाख्यातं तस्य सर्वं प्रजापते ।
(Page खं. ९ अ. १३ पान ४५)
एवं विस्तरतो गत्योः कथितं ते प्रजापते ॥ ७७॥

अतो गणेश्वरं दक्ष समाश्रय हितप्रदम् ।
योगक्षेमं स ते कुर्यादनन्यचेतसः सदा ॥ ७८॥

न शुक्ला नैव कृष्णा ते भविष्यति गतिः कदा ।
ब्रह्मभूयमयं भावं प्राप्स्यसे नात्र संशयः ॥ ७९॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खण्डे योगचरिते मुद्गलदक्षसंवादे योगामृतार्थशास्त्रे चित्तभूमिनिरोधेन शुक्लकृष्णगतियोगो नाम द्वादशोऽध्यायः ॥ ९.१२
॥ इति योगगीतासूपनिषत्सु सुगमासु अष्टमोऽध्यायः ॥ ९(दत्तगीता).८

## ९.१३ क्षेत्रक्षेत्रज्ञज्ञानयोगो नाम त्रयोदशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
क्षेत्रं वद महाभाग क्षेत्रज्ञं च तयोः परम् ।
सर्वगं ब्रह्म यत् प्रोक्तं येन ज्ञानं तयोर्भवेत् ॥ १॥

मुद्गल उवाच ।
देहं क्षेत्रमयं विद्धि देही क्षेत्रज्ञमञ्जसा ।
तयोर्योगे महद्ब्रह्म स्वत उत्थानसंज्ञितम् ॥ २॥

भूतानि पञ्चतन्मात्राः पञ्च ज्ञानेन्द्रियाणि तु ।
कर्मेन्द्रियाणि पञ्चैव वायवः पञ्च देवताः ॥ ३॥

इन्द्रियाणां दशैवाऽपि द्वेष इच्छा धृतिस्तथा ।
अव्यक्तं चेतना दुःखं सुखं मोहनमेव च ॥ ४॥

चित्तं बुद्धिः स्थूलसूक्ष्मे कारणं च तुरीयकम् ।

एतेषां योगभावे यत् क्षेत्रं तत् कथितं बुधैः ॥ ५॥

सदैकभावरूपश्च भेदैः संवर्जितः परः ।
क्षेत्रज्ञः क्षेत्रमास्थाय सर्वान्तर्यामितां दधे ॥ ६॥

तयोर्योगे परं ब्रह्म दृश्यादृश्यविवर्जितम् ।
दृश्यादृश्यमयं पूर्णं बोधरूपं प्रजापते ॥ ७॥

स्थूलसूक्ष्मसमात्माख्यैर्भावैर्माया विशेषतः ।
क्षेत्रज्ञं मोह्यस्वाधीनं करोति नित्यमादरात् ॥ ८॥

चतुर्भेदैर्विशेषेण मोहितोऽत्यन्तमेव सः ।
अहं देहस्वरूपाख्यो मन्यते सततं मुधा ॥ ९॥

ततः क्षेत्रस्य भोगार्थं नानाकर्मपरायणः ।
त्रिगुणेषु भ्रमेणैव भ्रमतेऽहम्ममात्मकः ॥ १०॥

ततस्तमोगुणं त्यक्त्वा राजसं धारयेन्नरः ।
राजसं च ततस्त्यक्त्वा सात्त्विकः सम्भवेत् क्रमात् ॥ ११॥

ततस्तुरीयमाश्रित्य गणेशं स भजेत् परम् ।
सर्वगं पञ्चमं साध्यं ब्रह्मीभूतो भवेन्नरः ॥ १२॥

इह सौख्यप्रदं यच्च कर्म सञ्जायते सदा ।
पापरूपमयं तेन ज्ञायते न कदाचन ॥ १३॥

देहभोगकरं पूर्णं शिश्नोदरपरायणम् ।
तामसं तद्विजानीहि चान्ते नरकदं भवेत् ॥ १४॥

तत्र तामससंयुक्ता भुक्त्वा दुःखं महाद्भुतम् ।
(Page खं. ९ अ. १३ पान ४६)
पुना रोगादिसंयुक्ता भवन्ति नीचयोनिषु ॥ १५॥

काणमूकादिदोषैस्ते संयुक्ताः पापचेतसः ।
दरिद्रादिसमायुक्ता भोगैर्हीना भवन्त्यपि ॥ १६॥

पुनः पापसमाचारा भवन्ति यदि मानवाः ।
अन्ते यमस्य गेहे ते नरकस्थाः पुनः पुनः ॥ १७॥

अतस्तमोगुणस्थं स्वभावं त्यक्त्वा च मानवाः ।
धर्मार्थधृतिसंयुक्ता यतन्ते दैवयोगतः ॥ १८॥

विद्धि राजसगं भावं नरा भुवि सकामकम् ।
सततं कर्म कुर्वन्ति भोगदं धर्मसंयुताः ॥ १९॥

वासनासंयुतं कर्म स्वधर्मस्थं भवेत्किल ।
तदेव राजसं विद्धि नानाभावगतं परम् ॥ २०॥

राजसाः सर्वभोगं तु भुक्त्वा पुनः पतन्त्यपि ।
इह ये यादृशं कर्म कुर्वते तादृशं फलम् ॥ २१॥

अथवा स्वल्पभावेन कृतं राजससम्भवम् ।
कर्म तेन नरा भूमौ भवन्ते तत्क्षणात् पुनः ॥ २२॥

अथवा विविधास्ते ते योनिषु सम्भवन्त्यपि ।
नीचोच्चासु विशेषेण जन्ममृत्युपरायणाः ॥ २३॥

राजसानां प्रजानाथ नरको नैव विद्यते ।
स्थावरं जङ्गमं श्रित्वा भवन्ते जन्मसंयुताः ॥ २४॥

तत्र दुःखं सुखं नाना भुञ्जते नात्र संशयः ।
एवं राजसगं सर्वं कथितं ते समासतः ॥ २५॥

अतः परं प्रवक्ष्यामि सात्विकं कामवर्जितम् ।
स्वधर्मस्था जना विद्धि तत्कुर्वन्ति निरन्तरम् ॥ २६॥

ब्रह्मार्पणतया यद्यद्भवति कर्म धर्मजम् ।
नानाविधं परं तत्तत् स्वात्त्विकं विद्धि मानद ॥ २७॥

तेन शुक्लगतिं श्रित्य गच्छन्ति मोक्षमञ्जसा ।
अतः सत्त्वगुणेनैव युक्ता भवन्ति मानवाः ॥ २८॥

अतः परं तुरीयं ते कथयामि समासतः ।
रसहीनस्वभावेन चित्तं देहसमन्वितम् ॥ २९॥

तदा भवति चेत्तुर्यं कर्म सञ्जायते परम् ।
नानाविधं जगत् सर्वं ब्रह्माकारं न संशयः ॥ ३०॥

यद्यत्तेन कृतं कर्म तदेव ब्रह्मदं भवेत् ।
स्तुतिनिन्दादिकं किञ्चिन्नैव तत्र प्रकीर्तितम् ॥ ३१॥

देवभक्तादिकं दक्ष नैव तुर्ये प्रतिष्ठितम् ।

ब्रह्मणि समभावेन वर्तते सर्वदा स्वयम् ॥ ३२॥

अन्तरे सर्वभावेषु पश्यति विश्वरूपिणम् ।
तदा तुरीयगं कर्म क्वचिद्भवति नान्यथा ॥ ३३॥

एवं सर्वसमत्वेन यद्भवेत्तत्तुरीयकम् ।
कर्म प्रारब्धयोगेन ब्रह्मणो रसभावतः ॥ ३४॥

अन्तेऽस्मितामये तेन लीनो भवति मानवः ।
महाकारणभावेन भवेत् त्रिगुणचालकः ॥ ३५॥

अतः परमहं कर्म कैवल्यं कथयामि ते ।
निषेधविधिहीनं यद्भवते कर्म स्वेच्छया ॥ ३६॥

ब्रह्मभूयमयं विद्धि पञ्चमं योगिसम्मतम् ।
कर्ता देहो न सन्देहस्तुरीयं प्रेरकं मतम् ॥ ३७॥

कुतस्तत्र व्यवस्थाख्यं तुरीयं वर्तते परे ।
चतुर्विधं येन सृष्टमिदं सर्वं स्वलीलया ॥ ३८॥

स एव कर्तृभावेन कारयितृप्रभावतः ।
तत्र तिष्ठति कोऽहं तु कुतो ब्रह्मविचारतः ॥ ३९॥

नाहं नरो न वै ब्रह्म मया साध्यं निरन्तरम् ।
भ्रान्त्या सर्वं न सन्देहो दृश्यते मायया मयि ॥ ४०॥

स्वेच्छया खेलति ब्रह्म चतुर्भेदमयं परम् ।
शुभाशुभं तस्य नास्ति वृथाऽहन्तां त्यजेन्नरः ॥ ४१॥

(Page खं. ९ अ. १३ पान ४७)
अनेनानुभवेनैव शान्त्या संवर्तते नरः ।
रसं सर्वत्र सन्त्यज्य ब्रह्मणो रसधारकः ॥ ४२॥

एवं चतुर्विधे भावे स्थितं देहिस्वरूपकम् ।
देहभ्रान्तिविहीनं तत्कृत्वा सोऽहम्परो भवेत् ॥ ४३॥

एवं क्रमेण योगीन्द्रो भवेद्योगान्नरोत्तमः ।
कथितं विस्तरात् सर्वं क्षेत्रक्षेत्रज्ञसाधनम् ॥ ४४॥

अथ वर्णाश्रमाचारं शृणु सर्वसुखप्रदम् ।
येन धर्मार्थकामांश्च लभेन् मोक्षं नरोत्तमः ॥ ४५॥

चित्तेन्द्रियाणि वश्यानि क्षमार्जवतपांसि च ।
शौचं श्रुतिस्मृतीनां वै ज्ञानं यत्र प्रतिष्ठति ॥ ४६॥

वेदाधारविहीनं यन्न करोति कदाचन ।
सदा ब्रह्मपरो यस्माद्ब्राह्मणः स च संस्मृतः ॥ ४७॥

शौर्यं दाक्ष्यं तथा दार्ढ्यं युद्धे सम्मुखता सदा ।
शरण्यरक्षणं नित्यं प्रभुत्वं दण्डधारणम् ॥ ४८॥

धृतिः क्षात्रं सदा तेजश्चित्तमौदार्यसंयुतम् ।
सुनीत्या पालनं पञ्च कर्मयुक्तः स बाहुजः ॥ ४९॥

क्रयविक्रयकौ नित्यं वस्तूनां भूमिकर्षणम् ।
गवां पालनकं त्रेधा कर्मयुक्तः स वैश्यकः ॥ ५०॥

त्रिवर्णसेवनं दानं नाममन्त्रं जपेत् परम् ।
पुराणश्रवणं शौद्रं कर्म पौराणिकं द्विजात् ॥ ५१॥

अन्त्यजानां पुराणोक्तं कर्म विप्रमुखोद्गतम् ।
नैव शूद्रसमं चान्यदस्पर्शत्वं द्विजादिषु ॥ ५२॥

कृतोपवीतको विप्रः क्षत्रियो वैश्य एव यः ।
वेदादिकं समभ्यस्यन् ब्रह्मचर्ययुतो भवेत् ॥ ५३॥

भिक्षाशनो भवेन्नित्यं गुरोराज्ञावशानुगः ।
गायत्रीं सञ्जपेन्नित्यं त्रिकालेषु च रोमधृक् ॥ ५४॥

सायं प्रातश्च जुहुयात् हविर्नित्यं जितेन्द्रियः ।
षोडशाब्दं द्वादशाब्दं ब्रह्मचर्यं चरेत् परम् ॥ ५५॥

पञ्चयज्ञपरो नित्यं नैमित्तं स समाचरेत् ।
कृतदारः प्रजार्थं स ऋतुगामी भवेद् गृही ॥ ५६॥

स्त्रीसङ्गं सम्परित्यज्य स्त्रिया युक्तो वसेद्वनम् ।
वन्येन सर्वकर्माणि कुर्यान्नित्यं तपः परम् ॥ ५७॥

नखलोमयुतश्चैव न ग्रामेषु प्रवेशयेत् ।
कुर्यादेवं वानप्रस्थो वायुभक्ष्यादिकं चरेत् ॥ ५८॥

मनसाऽपि स्मरेन्नैव स्त्रीसङ्गं न्याससंयुतः ।

चित्तनिग्रहसंयुक्तो भिक्षाशी सततं नरः ॥ ५९॥

कपर्दिकादिकं किञ्चिन्न स्पृशेत् स कदाचन ।
ब्रह्मणि ब्रह्मभूतत्वं तदर्थं श्रमयेत् सदा ॥ ६०॥

साक्षिवद् देहसंस्थोऽपि मौनादिदण्डधारकः ।
अथवा दण्डहीनः स ज्ञानदण्डधरो भवेत् ॥ ६१॥

एवं संन्यासकं कृत्वा सदा तिष्ठेद्यतात्मवान् ।
मुक्तिमार्गमयं शास्त्रं स्पृशेन्नान्यद्विनिश्चितम् ॥ ६२॥

वर्णाश्रमविहीनश्चेद्योगी पञ्चमगः स्मृतः ।
विधिनिषेधहीनः स यथा विनायको भवेत् ॥ ६३॥

एतत्ते सर्वमाख्यातं स्वधर्माचरणादिकम् ।
येनैव प्राप्यते योगो नरेण ब्रह्मदायकः ॥ ६४॥

दक्ष उवाच ।
धर्मार्थकाममोक्षाणां स्वरूपं वद मानद ।
ब्रह्मीभूतस्य भिन्नं मे भ्रमनाशकरं परम् ॥ ६५॥

केचिद्धर्मं महाश्रेष्ठमर्थं कामं तु मोक्षकम् ।
परात्परं वदन्त्येव ब्रह्मभूयं तथाऽपरे ॥ ६६॥

मुद्गल उवाच ।
धर्मेण ब्रह्मलोकश्च लभ्यते मानवैः परः ।
ब्रह्मा सर्वसमानश्च स्वधर्माख्यः प्रकीर्तितः ॥ ६७॥

अर्थः समर्थभावाख्य ईशलोकप्रदायकः ।
ईश्वरान्न समर्थोऽन्यः पश्य ब्रह्माण्डमण्डले ॥ ६८॥

कामो भोगात्मकः प्रोक्तो विष्णुलोकप्रदायकः ।
स लक्ष्मीपतिराख्यातो नानाकामप्रदः प्रभुः ॥ ६९॥

मुक्तिः सौरात्मिका प्रोक्ता सूर्यः पुरुष उच्यते ।
शुक्लमार्गधरः पूर्णः साक्षात् साक्षी विभावसुः ॥ ७०॥

ब्रह्मीभूतमयः प्रोक्तः स्वानन्दः पूर्णयोगदः ।
वदन्ति न परं लोकं स्वानन्दाद्वेदवादिनः ॥ ७१॥

अन्यच्छृणु प्रजानाथ पञ्चैते योगदायकाः ।

योगार्थवाचकाः सर्वे तत्र भेदं वदाम्यहम् ॥ ७२॥

योगधर्मेण योगश्च लभ्यते मानवैः परः ।
न योगादपरः श्रेष्ठस्तेनार्थोऽयं प्रकीर्त्यते ॥ ७३॥

योगकामेन योगोऽयं लभ्यते सर्वभावतः ।
मायाया वरणं त्यक्त्वा मोक्षयोगः प्रकीर्त्यते ॥ ७४॥

ब्रह्म ब्रह्मणि वेदेषु कथितं नात्र संशयः ।
तत्र योगेन योगी यो ब्रह्मीभूतः स वै स्मृतः ॥ ७५॥

धर्मार्थकाममोक्षाख्या योगशास्त्रे विशेषतः ।
भिन्ना मायामयाः प्रोक्ता ब्रह्मीभूतस्तु पञ्चमः ॥ ७६॥

ब्रह्मणि ब्रह्मभूतो यो योगी एव स उच्यते ।
न भिन्नः सर्वथा तस्माद्ब्रह्मणो ब्रह्मगः परः ॥ ७७॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
नवमे खण्डे योगचरिते मुद्गलदक्षसंवादे योगामृतार्थशास्त्रे
चित्तभूमिनिरोधेन क्षेत्रक्षेत्रज्ञज्ञानयोगो नाम त्रयोदशोऽध्यायः ॥ ९.१३
॥ इति योगगीतासूपनिषत्सु सुगमासु नवमोऽध्यायः ॥ ९(दत्तगीता).९

## ९.१४ नानामतैक्ययोगो नाम चतुर्दशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
वक्ष्यामि भावनां चैकां वेदशास्त्रार्थसंयुताम् ।
नानामतभयं त्यक्त्वा तया योगी भवेन्नरः ॥ १॥

चैतन्यं न्यायशास्त्रज्ञा वदन्ति ब्रह्ममुख्यकम् ।
चैतन्येन युताः सर्वे स्वस्वकार्यपरायणाः ॥ २॥

सर्वप्रकाशकत्वात्तच्चैतन्यं ब्रह्मसंज्ञितम् ।
चैतन्येन यदा त्यक्तं तदा नाशमुपैष्यति ॥ ३॥

पञ्चचित्तात्मयोगेन चैतन्यं ब्रह्मसंज्ञितम् ।
भवत्यत्र न सन्देहः शब्दार्थानामनेकतः ॥ ४॥

तार्किकाः प्रवदन्त्येव सर्वाभेदं परं मतम् ।

ब्रह्मवेदान्तवादेषु विद्यते शास्त्रसम्मतौ ॥ ५॥

पञ्चचित्तमया भेदा अभेदा योगिना कृताः ।
योग एकार्थभावाख्यो भवत्यर्थप्रमाणतः ॥ ६॥

धर्मशास्त्रविदः सर्वे बोधान्नैव परं पदम् ।
(Page खं. ९ अ. १४ पान ४९)
ब्रह्म बोधमयं मुख्यं भावाभावविवर्जितम् ॥ ७॥

पञ्चचित्तगतो धर्मस्त्यक्तव्यस्तेन योगकः ।
धर्मो भवेन्न सन्देहो ब्रह्मधर्मधरः प्रभुः ॥ ८॥

साङ्ख्या वदन्ति साङ्ख्यं यद्ब्रह्म सङ्ख्याविवर्जितम् ।
विबोधान्न परं ब्रह्म खेलहीनप्रभावतः ॥ ९॥

तत्र पञ्चविधं चित्तं परं योगेन सङ्ख्यया ।
हीनं तदेव भवति योगाख्यं शब्दमानतः ॥ १०॥

मीमांसका वदन्त्येव स्वसंवेद्यं परं मतम् ।
कारणं ब्रह्म तत्रान्यन्नास्ति ब्रह्मणि संस्थितम् ॥ ११॥

पञ्चचित्तं परित्यज्य ब्रह्मरूपं करोति तत् ।
मीमांसया स्वयं योगी योगवाच्यं भवेत् परम् ॥ १२॥

एवं नानामतैर्युक्ता वदन्ति शास्त्रभेदतः ।
ब्रह्म नानाविधं दक्ष तदेवं योगगं भवेत् ॥ १३॥

शक्तिर्ब्रह्मेति शाक्ता वै ते वदन्ति न तत्परम् ।
संयोगो द्वन्द्वयोर्यत्र तदेवं योगगं भवेत् ॥ १४॥

शक्तिः पञ्चमचित्तङ्गा सा ब्रह्मणि समागता ।
परिगृह्य निरोधाख्यं चित्तं देवी ततः स्मृता ॥ १५॥

सौरं ब्रह्मेति सौराश्च वदन्ति तु परात्परम् ।
तस्मात्परं न विद्येत सर्वाधारप्रमाणतः ॥ १६॥

भेदात्मकं स सञ्जीव्य नित्यं तिष्ठति चादरात् ।
तेन योगमयः सूर्यो भवत्यत्र न संशयः ॥ १७॥

वदन्ति विष्णुर्ब्रह्मेति मुख्यं यद्वैष्णवा जनाः ।
तस्मात् परं पदं नास्ति सदानन्दप्रमाणतः ॥ १८॥

चित्तं यत् पञ्चमं तत्र मोहं त्यक्त्वा तदात्मकम् ।
ब्रह्मयोगे भवेद्योग आनन्दो नात्र संशयः ॥ १९॥

शैवाः शैवं परं ब्रह्म वदन्ति मुख्यभावतः ।
वेदे तस्मात् परं नास्ति किञ्चिन् मोहविहीनकम् ॥ २०॥

निरोधं त्रिविधं दक्ष पराधीनं न संशयः ।
तत्रस्थं योगरूपाख्यं स्वाधीनं योगगं भवेत् ॥ २१॥

एवं नानामतैर्युक्ता स्वस्वदेवपरायणाः ।
वदन्ति तत् प्रमाणं वै शब्दानामर्थभावतः ॥ २२॥

अनेकार्थमयाः शब्दास्तेषु किं किं न सम्भवेत् ।
सर्वे योगार्थवाच्या वै जायन्ते योगिनः क्रमात् ॥ २३॥

अन्नप्राणादिकाः शब्दा एवं ब्रह्मप्रवाचकाः ।
ते सर्वे योगदा दक्ष भवन्ति ब्रह्मधारणात् ॥ २४॥

वेदान्तमथ वक्ष्यामि सर्वमान्यं विशेषतः ।
शास्त्राणि च तदङ्गानि तत्प्रमाणानि सर्वदा ॥ २५॥

यः सर्वं सर्वभावेषु युतो जानाति मायया ।
(Page खं. ९ अ. १४ पान ५०)
मायाहीनप्रभावेण योगस्तिष्ठति नित्यदा ॥ २६॥

तदेव ब्रह्ममुख्यं तु सर्वेभ्यो नात्र संशयः ।
ब्रह्मभ्य ऋग्जगादेव प्रज्ञानं योगगं स्मृतम् ॥ २७॥

पञ्चचित्तभवं सर्वं यो जानाति तदेव सः ।
योगस्तद्गतभावैः संवर्जितो भवति प्रभुः ॥ २८॥

अहं ब्रह्मेति यद्ब्रह्म सर्वदोषविवर्जितम् ।
सदैवं यजुषा प्रोक्तं मुख्यं वै परतः परम् ॥ २९॥

पञ्चचित्तभवा भेदास्तेष्वेवं भेदवर्जितम् ।
योगं विद्धि प्रजानाथ योगशास्त्रप्रमाणतः ॥ ३०॥

मायामोहयुतं यच्च मायामोहविवर्जितम् ।
तयोर्योगे परं ब्रह्म साम्ना सङ्कथितं किल ॥ ३१॥

मायामोहयुतं ब्रह्म स्वानन्दाख्यं ततः परम् ।
अयोगं मायया हीनं तयोर्योगे तु योगगम् ॥ ३२॥

ब्रह्म ब्रह्मणि संस्थं यन्मनोवाणीमयं न तत् ।
मनोवाणीविहीनं नाथर्ववेदो जगाद ह ॥ ३३॥

मनोवाणीमयः प्रोक्तः सम्प्रज्ञातो न संशयः ।
असम्प्रज्ञातकस्ताभ्यां हीनो योगस्तयोः परः ॥ ३४॥

एवं वेदार्थयुक्तानि महावाक्यानि मानद ।
योगाख्यानि विशेषेण जानीया योगसेवया ॥ ३५॥

कर्मादयः समाख्याताः शब्दा ब्रह्ममया बुधैः ।
भवन्ति योगसंज्ञस्थास्ते सर्वे योगिनां मते ॥ ३६॥

सर्वशास्त्रमतैक्यं ते कथितं शब्दधारणात् ।
तज्ज्ञात्वा मोहहीनः स सदा भवति मानवः ॥ ३७॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
नवमे खण्डे योगचरिते मुद्गलदक्षसंवादे योगामृतार्थशास्त्रे
चित्तभूमिनिरोधेन नानामतैक्ययोगो नाम चतुर्दशोऽध्यायः ॥ ९.१४
॥ इति योगगीतासूपनिषत्सु सुगमासु दशमोऽध्यायः ॥ ९(दत्तगीता).१०

## ९.१५ गणेशरहस्ययोगो नाम पञ्चदशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
अथो लयं प्रवक्ष्यामि येन चित्तं लयं व्रजेत् ।
ब्रह्मण्यास्थाय योगं च ज्ञात्वा योगं प्रजापते ॥ १॥

लयश्चतुर्विधः प्रोक्तो नित्यो नैमित्तिकः परः ।
तृतीयः प्राकृतो विप्रैः सारस्वतश्चतुर्थकः ॥ २॥

कर्माकर्मविकर्माख्यो नित्यः प्रोक्तो बुधैः पुरा ।
कर्मानुकूलभावेन जनानां जननादिकम् ॥ ३॥

क्षणक्रमादिमारभ्यायुषामन्तः समास्थितः ।
गर्भाधानाद्यवस्थानां प्रकाशश्च प्रकथ्यते ॥ ४॥

ब्रह्मणो दिवसान्ते स कुण्ठितो नात्र संशयः ।
नैमित्तिकलयेनैव त्रिलोकलयकारिणा ॥ ५॥

शुभाशुभयुताः सर्वे जन्तवो लयमाययुः ।
शुभाशुभफलैर्हीना बभूवुः कर्मकुण्ठनात् ॥ ६ ॥

स्वर्गमण्डलपर्यन्तं त्रैलोक्यं प्रलयं गतम् ।
तावता स प्रमाणेन नित्यः सङ्कथितो बुधैः ॥ ७॥

अथो नैमित्तिकं दक्ष कथयामि समासतः ।
चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते ॥ ८॥

नैमित्तिको दिनान्तो यस्तदाऽयं वर्तते लयः ।
तेन नैमित्तिकः प्रोक्तो नाम्ना सर्वार्थकोविदैः ॥ ९॥

अधुना प्राकृतं वच्मि व्यवस्थाभिर्युतं लयम् ।
महाकारणगं चेदं स प्राकृत उदाहृतः ॥ १०॥

तत्त्वानामेकभावेऽयं स्थूलसूक्ष्मसमात्मनाम् ।
प्राकृतः प्रकृतिस्थत्वात् कथ्यते विबुधैः परः ॥ ११॥

सारस्वतं परं पूर्णं शृणु योगप्रदं प्रभो ।
निरोधचित्तभावेन पञ्चचित्तलयात्मकम् ॥ १२॥

मनोवाणीमयं सर्वं विश्वं नानास्वभावगम् ।
(Page खं. ९ अ. १५ पान ५१)
मनोवाणीविहीनं त्वसम्प्रज्ञातं विदुर्बुधाः ॥ १३॥

वाण्या सङ्कथ्यते भावो मनस्तत्र प्रगच्छति ।
नानापदार्थभिन्नत्वात् सर्वेषां प्राणिनां प्रभो ॥ १४॥

वाण्या वाणीविहीनं यत् कथितं ब्रह्म हृद्गतम् ।
चित्तं समाधिना तत्र सदा तिष्ठति तादृशम् ॥ १५॥

वाणी सा द्विविधा प्रोक्ता ब्रह्माकारा जगन्मयी ।
तयोर्नाशे लयः प्रोक्तः परः सारस्वतो बुधैः ॥ १६॥

सरस्वतीलयं यत्र योगभावात् प्रगच्छति ।
महावाक्यादिसंयुक्ता स सारस्वत उच्यते ॥ १७॥

सारस्वतलयेनैव चित्तं पञ्चविधं प्रभो ।

चिन्तामणौ लयं कृत्वा तिष्ठ त्वं योगिसम्मतः ॥ १८॥

एतत् सर्वं समाख्यातं योगदं ते समासतः ।
गोपयैनं महायोगं ततो योगी भविष्यसि ॥ १९॥

मा योगं कथयस्व त्वमिमं कस्मै प्रजापते ।
पात्रहीनप्रभावेण भ्रंशदस्ते भविष्यति ॥ २०॥

वासनाहीनभावेन गणेशज्ञानलालसान् ।
तान् बोधय विशेषेण तदाऽयं शुभदो भवेत् ॥ २१॥

अत्र ते कारणं दक्ष कथयामि समासतः ।
तस्य श्रवणमात्रेण संशयस्तु लयं व्रजेत् ॥ २२॥

योगाकारो गणेशानो यदा खेलपरोऽभवत् ।
तदा तं वचनं माये सिद्धिबुद्धी समूचतुः ॥ २३॥

सिद्धिबुद्धी ऊचतुः ।
यदि खेलं करोषि त्वमावाभ्यां गणनायक ।
आवां त्वां छादयिष्यावो नानाभावप्रदर्शनात् ॥ २४॥

वेदादिभिस्तत्र वाणीमयी गाथा गजानन ।
स्वरूपं ते यथातथ्यं कथयिष्यति मानवान् ॥ २५॥

तेन त्वां ब्रह्मणां नाथं ज्ञास्यन्ते मानवादयः ।
त्वदुपासनमात्रेण भवेयुर्ब्रह्मभूतकाः ॥ २६॥

न त्वां छादयितुं शक्ते वाणीस्थं गणनायक ।
अतस्तदर्थमानन्दात् कुरु किञ्चिद्गजानन ॥ २७॥

एवं तयोर्वचः श्रुत्वा ते जगाद गजाननः ।
मा खेदं कुरुतं देव्यौ वाणीं सम्मोहयाम्यहम् ॥ २८॥

मोहिता सा मया वाणी वर्णनं भ्रान्तिदं च मे ।
करिष्यति प्रगूढार्थयुतं सत्यार्थभाषितम् ॥ २९॥

गूढार्थं नैव देवेशा योगीशास्तत्त्वदर्शिनः ।
ज्ञास्यन्ति तेन मां सर्वे न भजिष्यन्ति भावतः ॥ ३०॥

सिद्धिबुद्धियुतं ब्रह्म वाणी प्रकटयिष्यति ।
न गणेशमयीं गाथां कथयिष्यति योगदाम् ॥ ३१॥

सिद्धिबुद्धिमयं सर्वं जगद्ब्रह्म प्रसेव्य यः ।
यदा शुद्धो नरो भावी तदा मां ज्ञास्यति प्रिये ॥ ३२॥

परं सिद्धियुतं ब्रह्म कथितं सिद्धिदायकम् ।
स एव गणनाथोऽयं पतिः सिद्धेः प्रमाणतः ॥ ३३॥

परं बुद्धियुतं ब्रह्म परं बुद्धेः प्रकथ्यते ।
गणेश एव सम्प्रोक्तः पतिर्बुद्धेः प्रमाणतः ॥ ३४॥

एवं त्रैविध्यगं वाणी वदिष्यति सदा तु माम् ।
सिद्धिदं बुद्धिगं ब्रह्म शास्त्रेष्वेतत् त्रयं मतम् ॥ ३५॥

एवमुक्त्वा गणेशानः पुनस्तूष्णीं बभूव तम् ।
उवाच प्रणनामादौ भक्तिः परमदुःखिता ॥ ३६॥

भक्तिरुवाच ।
वरो दत्तस्त्वया नाथ सिद्ध्यै बुद्ध्यै गजानन ।
तेन भक्तिविहीनाश्च भविष्यन्ति सदा नराः ॥ ३७॥

(Page खं. २ अ. १५ पान ५२)
अतोऽहं दुःखसंयुक्ता चरिष्यामि निरन्तरम् ।
मां पालय गणाध्यक्ष भक्तियुक्तान् जनान् कुरु ॥ ३८॥

एवमुक्तो गणाध्यक्षस्तामुवाच सुदुःखिताम् ।
भक्तिं भक्तिप्रियः पूर्णः स्मयमानः प्रजापते ॥ ३९॥

श्रीगणेश उवाच ।
मा शोकं कुरु कल्याणि नरा मद्भक्तिकारकाः ।
देवनागासुराद्याश्च भविष्यन्ति न संशयः ॥ ४०॥

नानादेवपरा ये तु भक्त्या जन्मनि जन्मनि ।
सन्तुष्टा अमरास्तेभ्यो दास्यन्त्यग्निरुचिं मुदा ॥ ४१॥

ततस्तेऽग्निं समाराध्य भक्तियुक्ता निरन्तरम् ।
तुष्टं तं वै करिष्यन्ति नानायज्ञपरायणाः ॥ ४२॥

ततस्तस्य कृपायोगात् देवीभक्तियुता नराः ।
भविष्यन्ति च ते सर्वे तां भजिष्यन्ति संयताः ॥ ४३॥

एवं बहौ गते काले सन्तुष्टा सा प्रदास्यति ।
तेभ्यः सौरीं महाभक्तिं भजिष्यन्ति तया रविम् ॥ ४४॥

ततो बहौ गते काले सूर्यस्तोषसमन्वितः ।
उग्रां दास्यति भक्तिं तु वैष्णवीं तेभ्य आदरात् ॥ ४५॥

तया युक्ता भजिष्यन्ति विष्णुं भावसमन्विताः ।
नरास्ततः स सन्तुष्टो बहुकाले भविष्यति ॥ ४६॥

तुष्टो विष्णुः स्वयं तेभ्यो दाता स्याद्भक्तिमुत्तमाम् ।
शैवीं तया ततस्ते तं भजिष्यन्ति सदाशिवम् ॥ ४७॥

ततो बहौ गते काले तुष्टः शम्भुः प्रदास्यति ।
भक्तिं गाणेश्वरीं तेभ्यो भजिष्यन्ति तया च माम् ॥ ४८॥

नराः शान्तिं समालभ्य मत्तो योगपरायणाः ।
ब्रह्मीभूता भविष्यन्ति भजिष्यन्ति तथाऽपि ते ॥ ४९॥

एवं क्रमेण मद्भक्ता भविष्यन्ति नरादयः ।
त्वद्युक्ता मां भजिष्यन्ति तेषां वश्यो भवाम्यहम् ॥ ५०॥

न भक्ते ते समं मे वै प्रियं किञ्चिद्भविष्यति ।
यत्र भक्तिर्गता तत्र यथा स्थास्यामि किङ्करः ॥ ५१॥

स्वानन्दं लक्षलाभौ च सिद्धिं बुद्धिं मदीयकम् ।
सर्वं तेभ्यः प्रदास्यामि भक्तेभ्यो नात्र संशयः ॥ ५२॥

अयं मदीयदेहश्च भक्त्यधीनो भविष्यति ।
भक्ताग्रे भक्तरूपेण सदा स्थास्यामि दासवत् ॥ ५३॥

कर्मभ्यश्चाधिकं भक्ते तपः परमदुश्चरम् ।
तपोभ्यश्चाधिकं ज्ञानं निःसङ्गपददायकम् ॥ ५४॥

ज्ञानाद्योगः समाख्यातोऽधिकः शान्तिप्रदायकः ।
तस्माच्च त्वं महाभक्ते भविष्यस्यधिका प्रिया ॥ ५५॥

भक्तेः परं न किञ्चिन् मे ह्यधिकं शास्त्रसम्मतम् ।
भविष्यति महाभागे मा चिन्तां कुरु सर्वथा ॥ ५६॥

अन्यद्वाणी मदीयं यद् गूढं रूपं वदिष्यति ।
तदर्थं ते प्रियं भक्ते करोमि शृणु मे वचः ॥ ५७॥

मदीयभुजसंस्थोऽयं मुद्गलः सर्वदर्पहा ।
स एव ब्राह्मणो भूत्वा चरिष्यति निरन्तरम् ॥ ५८॥

कृतं तेन मदीयं वै पुराणं वेदबृंहितम् ।
गूढार्थद्योतनं भावि सर्वेभ्यो भक्तिदायकम् ॥ ५९॥

स्वरूपं तत्र मे भक्ते प्रकटं पश्यतां नृणाम् ।
शृण्वतां तत्तदा पूर्णं भविष्यति न संशयः ॥ ६०॥

तथापि दुर्लभा भक्तिर्मदीया त्वं भविष्यसि ।
अतोऽल्पज्ञा न मां देवि भजिष्यन्ति कदाचन ॥ ६१॥

(Page खं. ९ अ. १६ पान ५३)
विघ्नं मौद्गलशास्त्रेऽहं करिष्यामि भ्रमप्रदम् ।
अश्रद्धं तेन नष्टं तद्भविष्यति कदा कदा ॥ ६२॥

तव भावस्य रक्षार्थं मौद्गलं निर्मितं मया ।
अतः परं महाभक्ते वद किं ते करोम्यहम् ॥ ६३॥

एवं तस्य वचः श्रुत्वा हर्षिता सा ननाम तम् ।
गणेशं भावगम्भीरा न किञ्चित् पुनरब्रवीत् ॥ ६४॥

एतत्ते कथितं दक्ष गुह्यं विघ्नेश्वरस्य यत् ।
अतो गुप्तं प्रकर्षेण शास्त्रं कुरु मदीयकम् ॥ ६५॥

त्वं दक्षः सर्वभावेषु दक्षाद्दक्षो न विद्यते ।
अतस्तुभ्यं मया सर्वं कथितं शास्त्रमुत्तमम् ॥ ६६॥

हृदिस्थेन गणेशेन प्रेरितोऽहं प्रजापते ।
तदाज्ञया हृदिस्थं मे कथितं शास्त्रमुत्तमम् ॥ ६७॥

अनेन विधिना दक्ष भज त्वं गणनायकम् ।
तेनेप्सितं समासाद्य गाणपत्यो भविष्यसि ॥ ६८॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
नवमे खण्डे योगचरिते मुद्गलदक्षसंवादे योगामृतार्थशास्त्रे
चित्तभूमिनिरोधेन गणेशरहस्ययोगो नाम पञ्चदशोऽध्यायः ॥ ९.१५
॥ इति योगगीतासूपनिषत्सु सुगमासु एकादशोऽध्यायः ॥ ९(दत्तगीता).११

## ९.१६ भक्तिरहस्यवर्णनयोगो नाम षोडशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
धन्योऽहं कृतकृत्योऽहं कृतस्त्वद्य महामते ।
त्वदाज्ञावशगः स्वामिन् गुप्तं ग्रन्थं करोमि ते ॥ १॥

अधुना वद मे भक्तिं गणेशस्य तया परम् ।
भजिष्यामि विशेषेण सदा भक्तिपरायणः ॥ २॥

मुद्गल उवाच ।
साङ्ख्ययोगौ प्रजानाथ शृणु ते कथयाम्यहम् ।
ताभ्यां युक्तस्ततो भक्तिं करिष्यसि परां मुदा ॥ ३॥

चित्तं पञ्चविधं प्रोक्तं पञ्चसङ्ख्याविवर्जितम् ।
कुरु चिन्तामणौ लीनभावेन त्वं सुयोगतः ॥ ४॥

एतत् साङ्ख्यं समाख्यातं गणेशाभेददायकम् ।
तेन योगी भवेत् सद्यः शान्तियुक्तो विशेषतः ॥ ५॥

पञ्चचित्तोद्भवेषु त्वं भोगेष्वसि सुसंस्थितः ।
बिम्बरूपेण तान् भुङ्क्ष्व शान्त्या रससमन्वितः ॥ ६॥

चित्तेषु चित्तभूतेषु कर्म ज्ञानादिकं भवेत् ।
तद्गणेशार्पणं सर्वं कुरु त्वं नित्यमादरात् ॥ ७॥

स्वधर्मसंस्थितं देहं चित्तं शान्तिसमन्वितम् ।
कुरुष्व सततं दक्ष ब्रह्मभावपरायणः ॥ ८॥

अयं योगः समाख्यातः शास्त्रे वै सर्वसम्मतः ।
वेदेषु च पुराणेषु ब्रह्मभूयप्रदायकः ॥ ९॥

साङ्ख्ययोगौ समाराध्य भजस्व गणनायकम् ।
योगाकारं समाध्याय तन्निष्ठस्तत्परायणः ॥ १०॥

श्रवणं गणनाथस्य गुणानां नित्यमादरात् ।
कीर्तनं तस्य तद्वत्त्वं कुरुष्वैतद्रसैर्युतम् ॥ ११॥

(Page खं. ९ अ. १६ पान ५४)

गाणेशस्य च भावस्य विस्मृतिं मा कुरु प्रभो ।
गणेशपादजं मोहं धारयेः सत्यभावतः ॥ १२॥

साङ्गं गणेश्वरस्यैव कुरु सर्वं विशेषतः ।
गणेशान्न परं श्रेष्ठं तस्मात्तन्निष्ठको भव ॥ १३॥

गाणपत्यस्य मार्गस्य सेवनं कुरु सर्वदा ।
साक्षिरूपं गणेशानं ज्ञात्वा हृत्स्थं भजस्व च ॥ १४॥

गणेशान्नैव भिन्नोऽहं भावयस्व निरन्तरम् ।
एवं नवप्रकारैस्तं भज त्वं भक्तिसंयुतः ॥ १५॥

बाह्यान्तरं गणेशार्थं कुरु त्वं कर्म चादरात् ।
नवधा खण्डभावेन पूर्णभक्तो भविष्यसि ॥ १६॥

अथो चतुर्विधां भक्तिं कथयामि शृणुष्व ताम् ।
कायिकां वाचिकां पूर्णां मानसीं नित्यदा कुरु ॥ १७॥

तथा सांसर्गिकिं दक्ष तस्याश्चिह्नं वदाम्यहम् ।
गणेशार्थं सदा देहश्रमं कुरु महामते ॥ १८॥

गणेशभावहीनां यां वाचं मा त्वं वदस्व ताम् ।
गणेशचिन्तनं तद्वद्गणेशे भावकस्य वा ॥ १९॥

गणेशभक्तियुक्तानां सङ्गतिं कुरु सर्वदा ।
एवं भजस्व भक्त्या त्वं भक्तराजो भविष्यसि ॥ २०॥

भक्तिः सा द्विविधा दक्ष मानवैः क्रियते परा ।
पाखण्डसंयुता पूर्णा देवप्रीत्यर्थमेव वा ॥ २१॥

देहे विषयभोगार्थं भजनं सम्प्रवर्तते ।
पाखण्डिनां सदा दक्ष लोकमोहकरं परम् ॥ २२॥

पाखण्डभजनस्यैव चिह्नं मुख्यं वदाम्यहम् ।
तच्छृणु त्वं हितार्थाय लोकानां लोकतारक ॥ २३॥

सर्वाहङ्कारनिर्मुक्तः पाखण्डी दृश्यते जनैः ।
जना मोहयुता येन भवन्ति भजनं यतः ॥ २४॥

यत्र येषां रुचिर्दक्ष यादृशी तादृशं सदा ।
करोति तत्र यत्नेन सर्वभावं प्रदर्शयन् ॥ २५॥

येनैव विषयाणां च प्राप्तिः सञ्जायते परा ।
तादृशं भजनं तस्य परं भवति सर्वदा ॥ २६॥

अथवा चैकनिष्ठः स भवति देवतत्परः ।
स्वदेवभक्तान् सम्मोह्य भुङ्क्ते दुष्टोऽर्थलालसः ॥ २७॥

स्वदेवभजने सक्ता जनाः स्वल्पमतो बहु ।
तेषां रुचिप्रमाणेन भवति भजनं यतः ॥ २८॥

जनानां मोहदा भक्तिः कथिता ते प्रजापते ।
पाखण्डिभिः सदा पूर्णा सेव्यते सा रुचिप्रदा ॥ २९॥

पाखण्डसंयुता नित्यं भक्तिं कुर्वन्ति शाश्वतीम् ।
चाण्डालास्ते मताः शास्त्रे देवानां दुःखदायकाः ॥ ३०॥

सत्यसङ्कल्पसिद्ध्या ते संयुतं देवमुत्तमम् ।
सङ्गृह्य भिक्षुकं दुष्टाः कुर्वतेऽधः प्रगामिनः ॥ ३१॥

अथ देवप्रियां भक्तिं शृणुष्व सुसमाहितः ।
विचार्य हृदये भक्तिं कुरुते देवतुष्टये ॥ ३२॥

सदा देवपरो भूत्वा भजतेऽनन्यमानसः ।
लोकानां तत्र सम्भूयाद्रुचिर्वा ह्यरुचिः कदा ॥ ३३॥

लोका निन्दन्ति तं भक्तमुत्तमाश्च स्तुवन्ति वा ।
ताननादृत्य देवस्य प्रीत्यर्थं भजते सदा ॥ ३४॥

स्वकीये हृदये सोऽपि विचार्य कुरुते सदा ।
भक्तिं यां तां प्रजानाति देवस्तस्य हृदि स्थितः ॥ ३५॥

यदा दैवस्य मार्गस्यापमानं वा ह्यनादरम् ।
कुर्वन्ति तान् परित्यज्य तदा भजति सर्वदा ॥ ३६॥

लोकानां रुचिदं तस्य भजनं जायते कदा ।
कदा तेषां विरुद्धं वा भक्त्या तद्देवतुष्टिदम् ॥ ३७॥

(Page खं. ९ अ. १६ पान ५५)
अनेन विधिना दक्ष भजस्व गणनायकम् ।
गाणपत्यो न सन्देहो भविष्यसि परात् परः ॥ ३८॥

पञ्च चित्तेषु यज्ज्ञानं तद्विद्धि विषयात्मकम् ।
तत्र रुचिविहीनस्त्वं भजस्व गणनायकम् ॥ ३९॥

सदा गणेश्वरे दक्ष रसोत्पत्तिः प्रजायते ।
चित्तस्य नान्यभावेषु यस्य भक्तः स उच्यते ॥ ४०॥

एतद्भक्तिरहस्यं ते कथितं भक्तिदायकम् ।
समासेन भजस्वैव गणेशं ब्रह्मनायकम् ॥ ४१॥

इमं योगं नरो यस्तु शृणुयाच्छ्रावयेत् परम् ।
योगिभ्यो वाऽन्यजन्तुभ्यः स ईप्सितमवाप्नुयात् ॥ ४२॥

नानेन सदृशं किञ्चिद्योगदं शास्त्रसम्मतम् ।
अस्य श्रवणमात्रेण ब्रह्मीभूतो भवेन्नरः ॥ ४३॥

महापापोपपापेभ्यो मुच्यते पठनात् किल ।
श्रवणादस्य योगस्यान्ते ब्रह्म प्राप्नुयात् परम् ॥ ४४॥

पुत्रपौत्रादिसंयुक्तो धनधान्यसमन्वितः ।
आरोग्यादिसमायुक्तो लभेदन्ते परं पदम् ॥ ४५॥

सकामको लभेद्भोगान् पठनादस्य निश्चितम् ।
अन्ते ब्रह्ममयो भावी श्रवणान्नात्र संशयः ॥ ४६॥

योगगीतां पठेद्यस्तु निष्कामः शृणुयादथो ।
स विघ्नहीनतां प्राप्य ब्रह्मीभूतो भविष्यति ॥ ४७॥

योगगीतां पठेद्यस्तु स भवेत् शान्तिसंयुतः ।
शृणुयाद्ब्रह्मभूतश्च ज्ञानवान् स्थितिसंयुतः ॥ ४८॥

कर्मनिष्ठैरियं सेव्या तपोनिष्ठैः प्रजापते ।
तत्तत्सिद्धिसमायुक्तैरिहान्ते ब्रह्म चाप्यते ॥ ४९॥

नित्यं पठेदिमां गीतां स गणेशो धरातले ।
दर्शनात् पावनो नृणां सर्वसिद्धिप्रदायकः ॥ ५०॥

एककालं द्विकालं वा त्रिकालं यः पठेदिमाम् ।
कृत्वाऽवश्यं गणेशानं स भवेत् सर्वदायकः ॥ ५१॥

शुक्लकृष्णचतुर्थ्योस्तु पठेदेतां नरोत्तमः ।
स भुक्त्वा सकलान् भोगानन्ते ब्रह्म लभेत् परम् ॥ ५२॥

अथवा शुक्लजायां स चतुर्थ्यां भाद्रमाघयोः ।
ज्येष्ठे माघे च कृष्णायां पठेदीप्सितमाप्नुयात् ॥ ५३॥

अथवा गणराजस्य तीर्थक्षेत्रादिके गतः ।
पठेदिमां सुभावेन स ईप्सितमवाप्नुयात् ॥ ५४॥

वेदशास्त्रपुराणेषु यत् सारं समुदाहृतम् ।
योगगीतामयं तुभ्यं सर्वसिद्धिप्रदायकम् ॥ ५५॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
नवमे खण्डे योगचरिते मुद्गलदक्षसंवादे योगामृतार्थशास्त्रे
चित्तभूमिनिरोधेन भक्तिरहस्यवर्णनयोगो नाम षोडशोऽध्यायः ॥ ९.१६
॥ इति योगगीतासूपनिषत्सु सुगमासु द्वादशोऽध्यायः ॥ ९(दत्तगीता).१२
॥ श्रीगजाननार्पणमस्तु ॥

॥ गीताश्लोकसङ्ख्या ॥ ९९८॥

## ९.१७ दक्षसिद्धिप्राप्तिवर्णनं नाम सप्तदशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
एतत्ते कथितं सर्वं रहस्यं परमं मया ।
गणेशस्य प्रजानाथ समासेन शुभप्रदम् ॥ १॥

अतो भज गणाध्यक्षं सर्वेप्सितमवाप्स्यसि ।
मा शोकं कुरु दक्ष त्वं यज्ञध्वंसभवं परम् ॥ २॥

सूत उवाच ।
एवमुक्त्वा ददौ तस्मै मन्त्रमेकाक्षरं परम् ।
विधियुक्तं विधानेन मुनिर्दक्षाय मुद्गलः ॥ ३॥

तेन सम्पूजितो योगी ह्यभवद्गन्तुमुद्यतः ।
तस्मिन् काले गणाध्यक्षः प्रकटोऽभूच्छुभप्रदः ॥ ४॥

मूषकोपरिसंस्थं तं सिद्धिबुद्धिसमन्वितम् ।
पाशाङ्कुशरदैर्युक्तमभयं धारकं प्रभुम् ॥ ५॥

गजास्यं रक्तवस्त्रैः सञ्छादितं भूषणैर्युतम् ।
नाभिशेषं गणैर्युक्तं प्रमोदाद्यैः सुसेवितम् ॥ ६॥

त्रिनेत्रमेकदन्तं च महाकुक्षिं परात्परम् ।
दृष्ट्वा समागतं दक्षो मुद्गलो हर्षितोऽभवत् ॥ ७॥

उत्थाय सर्वसंयुक्तो ननाम द्विरदाननम् ।
दक्षश्च मुद्गलो विप्रो दण्डवत् पृथिवीतले ॥ ८॥

ततोऽतिहर्षसंयुक्तो दक्षस्तं प्रजगाद ह ।
गणेशं भक्तिसंयुक्तः सरोमाञ्चोऽश्रुसंयुतः ॥ ९॥

दक्ष उवाच ।
धन्योऽहं सर्वभावैश्च दर्शनात्ते गजानन ।
वेदान्तागोचरोऽसि त्वं ब्रह्मरूपः समागतः ॥ १०॥

धन्योऽयं मुद्गलो योगी पुराणं धन्यमुत्तमम् ।
मौद्गलं येन विघ्नेशो मया प्राप्तः परात्परः ॥ ११॥

मुद्गलेन समाख्यातं भक्त्याधीनो गजाननः ।
तदद्य सत्यरूपं यन् मया ज्ञातं प्रमाणतः ॥ १२॥

मुद्गलस्यैव भक्त्या त्वं मोहितः सहसाऽऽगतः ।
त्वत्तः श्रेष्ठो गणेशान मुद्गलो नात्र संशयः ॥ १३॥

एवं प्रवदतस्तस्य दक्षस्यासीन् महात्मनः ।
भक्ते रसः समुत्पन्नो ननर्त स हि विह्वलः ॥ १४॥

भ्रान्तस्तन्न स्म जानाति कृत्यं विघ्नेश्वराय सः ।
जय हेरम्ब विघ्नेश गणेश मूषकध्वज ॥ १५॥

गजानन परेशान जय लम्बोदर प्रभो ।
उच्चरन् सास्त्रनेत्रश्च देहातीत इवाऽभवत् ॥ १६॥

एतस्मिन्नन्तरे सर्वे समाजग्मुः सुरेश्वराः ।
शिवविष्णुमुखास्तत्रागतं ज्ञात्वा गजाननम् ॥ १७॥

मुनयो भृगुमुख्याश्च नारदाद्याः सुरर्षयः ।
शुकाद्याः सनकाद्याश्च कपिलाद्या महामुने ॥ १८॥

वसवः साध्यरुद्राश्च गन्धर्वाप्सरसस्तथा ।

नवमे खण्डे योगचरिते योगामृतार्थशास्त्रे मुद्गलदक्षसंवादे
भाद्रपदादिसार्धैकमास श्रवणमाहात्म्यवर्णनं नाम सप्तविंशोऽध्यायः ॥ ९.२७

## ९.२८ महोदरचरितमाहात्म्यवर्णनं नामाष्टाविंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

सूत उवाच ।
ब्राह्मणो वन्ध्यभावेन पीडितः कर्मणा पुरा ।
गार्ग्यवंशभवः कोऽपि नाम्ना शम्भुरितीरितः ॥ १॥

नानोपायाः कृतास्तेन वान्ध्यदोषप्रहारिणः ।
तथापि तस्य पुत्रो वा पुत्री द्विज बभूव न ॥ २॥

ततोऽतिदुःखसंयुक्तो गौतमं स जगाम ह ।
सस्त्रीकः पुत्रकामार्थं तं ननाम महामतिम् ॥ ३॥

गौतमेन मुनीन्द्रेण सत्कृतः शम्भुरावसत् ।
सेवार्थं स्वगुरोस्तत्र यत्नयुक्तो बभूव ह ॥ ४॥

एकदा सुखमासीनं गौतमं तं च भक्तितः ।
जगाद पुत्रप्राप्त्यर्थं वचनं स्वहितावहम् ॥ ५॥

शम्भुरुवाच ।
नाना यत्नाः कृताः स्वामिन् पुत्रप्राप्त्यर्थमादरात् ।
लभ्यते नैव सन्तानो मया किं वद कारणम् ॥ ६॥

येनोपायेन मे पुत्रो भविष्यति महामते ।
तमुपायं वद स्वामिन् करिष्यामि त्वदाज्ञया ॥ ७॥

त्वं गुरुर्मे परा काष्ठा परं त्वत्तो न विद्यते ।
तारयस्व महाभाग वान्ध्यदोषसमन्वितम् ॥ ८॥

तस्य तद्वचनं श्रुत्वा तं जगाद महामुनिः ।
गौतमः सर्वतत्त्वज्ञः शम्भुं दुःखसमन्वितम् ॥ ९॥

गौतम उवाच ।
मा कुरुष्व वृथा चिन्तां तव पुत्रा द्विजोत्तम ।
भविष्यन्ति त्रयः प्राज्ञा वेदज्ञा गणपप्रियाः ॥ १०॥

शृणु त्वं मौद्गलं मत्तः सर्वसिद्धिप्रदायकम् ।
तेनानन्तभवस्थं ते पापं नश्येच्च तत्क्षणात् ॥ ११॥

पुण्यराशिः स्वयं साक्षाद्भविष्यसि च तारकः ।
अन्येषां नात्र सन्देहः सर्वसिद्धियुतस्तथा ॥ १२॥

अन्ते गणेश्वरं प्राप्य ब्रह्मीभूतो भविष्यसि ।
तिष्ठात्र ज्येष्ठमासेऽहं कथयिष्यामि मौद्गलम् ॥ १३॥

एवं तस्य वचः श्रुत्वा हर्षयुक्तो बभूव ह ।
सुशीलया स्त्रिया सार्द्धं तत्रैवं संस्थितोऽभवत् ॥ १४॥

ततः स्वल्पे गते काले ज्येष्ठमासः समाययौ ।
अन्ये मुनिगणास्तत्र श्रवणार्थं समाययुः ॥ १५॥

तान् दृष्ट्वा स्त्रीसमायुक्तः शम्भुश्चातीव हर्षितः ।
विधियुक्ततया सर्वे श्रोतारस्तत्परा बभुः ॥ १६॥

ज्येष्ठे शुक्ले प्रतिपदि गौतमो योगिनां वरः ।
समारभत् स हर्षेण मौद्गलं सर्वसिद्धिदम् ॥ १७॥

व्याख्यां चकार सर्वज्ञो मौद्गलस्य यथार्थतः ।
तच्छ्रुत्वा विस्मिताः सर्वे बभूवुः श्रवणे रताः ॥ १८॥

नित्यं नियमसंयुक्ताः शुश्रुवुर्भक्तिसंयुताः ।
तत्र कस्मिन् दिने विप्र बभूव परमाद्भुतम् ॥ १९॥

गर्दभस्तत्र दैवेन ह्याययौ त्वतिदुःखितः ।
ज्वरेण पीडितोऽत्यन्तं दूरे तस्थौ महामुने ॥ २०॥

शुश्राव मौद्गलस्यैव श्लोकं ज्ञानविवर्जितः ।
पीडाहीनो बभूवाऽपि तत्र किञ्चित् स रासभः ॥ २१॥

हृदा समन्वितो भूत्वा तस्थौ श्रवणलालसः ।
ततो गौतमविप्रेण समाप्तं तत्कृतं मुदा ॥ २२॥

सर्वे स्वस्वक्रियां चक्रुः पुनः प्रातः समाययुः ।
गर्दभो दुःखहीनः स बभूवे तत्क्षणान् मुने ॥ २३॥

स ययौ स्वेच्छया युक्तः कालवेगान् ममार सः ।
तस्मिन् काले च तं नेतुं गाणेशाः प्रययुर्मुदा ॥ २४॥

तं गृह्य ब्रह्मभूतं ते चक्रुः श्रवणपुण्यतः ।
तं दृष्ट्वा देवविप्राद्याः स्वर्गस्था विस्मयं ययुः ॥ २५॥

(Page खं. ९ अ. २९ पान ७७)
अथो शृणु महाभाग गौतमो हर्षनिर्भरः ।
आषाढ्यां पूर्णिमायां स समाप्तं तच्चकार ह ॥ २६॥

द्विजाद्यैः स प्रतिपदि चक्रे वै पारणं पुरा ।
सर्वे हर्षयुतास्तं ते नत्वा स्वस्वाश्रमं ययुः ॥ २७॥

शम्भुः सुशीलया सार्धं जगाम स्वाश्रयं ततः ।
गणेशमभजन्नित्यं ज्ञात्वा योगवपुर्धरम् ॥ २८॥

ततः स्वल्पे गते काले सुशीला गर्भसंयुता ।
बभूव तां प्रदृश्यैवाभवच्छम्भुः सुविस्मितः ॥ २९॥

ततः शुभे मुहूर्ते सा सुषुवे पुत्रमुत्तमम् ।
सर्वलक्षणसंयुक्तं सुता एवं त्रयोऽभवन् ॥ ३०॥

वेदज्ञान् सर्वमान्यांश्च गाणपत्यपरायणान् ।
तान् दृष्ट्वा विस्मितः शम्भुर्गुरुं सस्मार गौतमम् ॥ ३१॥

मौद्गले तत्परः सोऽपि बभूवे नित्यमादरात् ।
अन्ते विघ्नेश्वरं प्राप तल्लीनः प्रबभूव ह ॥ ३२॥

नाना जना गणेशानं लेभिरे मौद्गलस्य च ।
श्रवणेन च पाठेन मुने तेषु कति ब्रुवे ॥ ३३॥

एतत्ते कथितं विप्र ज्येष्ठात् सार्द्धैकमासके ।
मौद्गलश्रवणस्यैव माहात्म्यं स्वल्पभावतः ॥ ३४॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमौद्गले महापुराणे
नवमे खण्डे योगचरिते योगामृतार्थशास्त्रे मुद्गलदक्षसंवादे
महोदरचरितमाहात्म्यवर्णनं नामाष्टाविंशोऽध्यायः ॥ ९.२८

## ९.२९ वर्षेण मौद्गलश्रवणमाहात्म्यवर्णनं नामैकोनत्रिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

सूत उवाच ।
राजाऽऽसीत् पुण्ड्रदेशस्य सुग्रीवः सर्वशास्त्रवित् ।
नानाधर्मपरः सोऽपि शास्त्रार्थज्ञो विचक्षणः ॥ १॥

तस्य देशे ह्यनावृष्टिर्बभूवे दुःखवर्धिनी ।
न ववर्ष कदा मेघस्ततो राजाऽतिदुःखितः ॥ २॥

इन्द्रस्य वरुणस्यैवानुष्ठाने तत्परोऽभवत् ।
ब्राह्मणैर्नित्यमत्यन्तं तोषयामास मेघपम् ॥ ३॥

ततो वै नव वर्षापि मेघः पापेन चेरितः ।
वीक्ष्यातिदुःखसंयुक्तः सुग्रीवोऽभूत्ततो नृपः ॥ ४॥

राजा राज्यं परित्यज विश्वामित्रं जगाम ह ।
पप्रच्छ तं प्रणम्याऽसौ मेघवृष्टिकरं परम् ॥ ५॥

तेन सङ्कथितं विप्र मौद्गलं शृणु भूमिप ।
देशे वृष्टिश्च सम्पूर्णा भविष्यति न संशयः ॥ ६॥

ततो राजा द्विजैस्तत्र लेखयित्वा च मौद्गलम् ।
ययौ स्वनगरं हृष्टस्तच्छुश्राव महामतिः ॥ ७॥

जनैः सार्धं समीपस्थैस्ततो वृष्टिर्बभूव ह ।
प्रारब्धे मौद्गले तत्र तत् दृष्ट्वा विस्मितो नृपः ॥ ८॥

सर्वे हर्षयुता लोका जाता पुण्ड्रनिवासिनः ।
राजा गणेश्वरं नित्यमभजद्भक्तिसंयुतः ॥ ९॥

(Page खं. ९ अ. २९ पान ७८)
भाद्रे शुद्धप्रतिपदि समारभ्य स मौद्गलम् ।
शुश्राव नित्यमानन्दात् पुराणं सर्वसिद्धिदम् ॥ १०॥

पुनर्भाद्रपदं प्राप्य परां शुक्लचतुर्थिकाम् ।
समाप्तं तत् स पञ्चम्यां चक्रे वै हर्षसंयुतः ॥ ११॥

अतिसंहर्षितो राजा श्रावणं प्राप्य सौख्यदम् ।

शुक्लप्रतिपदि प्राज्ञैः प्रारभन्मौद्गलं पुनः ॥ १२॥

नित्यं शुश्राव सुग्रीवो गाणपत्यपरायणः ।
आषाढ्यां स समाप्तं तदमायां प्रचकार ह ॥ १३॥

पुनः प्रारभ्य सुग्रीवो जनैः श्रेष्ठैः समन्वितः ।
शुश्राव वर्षमध्ये स एवं वार्षिकमाचरत् ॥ १४॥

प्रतिवर्षं महाभक्त्या शुश्रुवुः सर्वनागराः ।
भक्तियुक्ता गणेशानमभजन् दुःखवर्जिताः ॥ १५॥

न तत्र वान्ध्यदोषेण युक्तः कश्चिद्बभूव ह ।
न रोगशोकसंयुक्तः सुग्रीवे राज्यकर्तरि ॥ १६॥

सर्वसम्पत्समायुक्ता जनास्तत्र बभूविरे ।
रोगदोषादिभिर्भावैर्हीनाश्च भयवर्जिताः ॥ १७॥

ततः सर्वैः स राजर्षिर्जगाम नगरस्थितैः ।
गणेशं ब्रह्मभूतस्तैर्बभूवे परमद्युतिः ॥ १८॥

गच्छतो निजलोकं वै तस्याङ्गाद्वायुनाऽपरे ।
स्पृष्टा रौरवसंस्थास्ते पीडाहीना बभूविरे ॥ १९॥

तान् गृह्य गाणपा विप्र ब्रह्मीभूतान् प्रचक्रिरे ।
यमाद्या विस्मिताः सर्वे प्रशशंसुश्च मौद्गलम् ॥ २०॥

विप्रवार्षिकमेवं ते कथितं श्रवणस्य यत् ।
मौद्गलस्य हि माहात्म्यं सर्वसिद्धिप्रदायकम् ॥ २१॥

सुग्रीवदेशगः कश्चिच्छ्रुत्वा वृत्तान्तमद्भुतम् ।
कुष्ठयुक्तो ययौ तत्र पुराणश्रवणार्थतः ॥ २२॥

वार्षिकं राजशार्दूलो समारभत भक्तितः ।
सोऽपि नित्यं प्रशुश्राव कुष्ठनाशार्थमुत्तमम् ॥ २३॥

श्रुत्वा कुष्ठविहीनः स बभूवे हर्षसंयुतः ।
जगाम स्वगृहं पद्भ्यां गृहकार्यरतोऽभवत् ॥ २४॥

भुक्त्वा भोगान् मनोज्ञान् सोंऽते जगाम गजाननम् ।
ब्रह्मीभूतो बभूवाऽपि श्रवणस्य फलेन वै ॥ २५॥

एवं सकृत् समाश्रुत्य मौद्गलं विविधा जनाः ।
इह भुक्त्वाऽखिलान् भोगानन्ते स्वानन्दमाययुः ॥ २६॥

तत्रैव कति ते ब्रूयां नालं वर्षशतैरपि ।
अतः सङ्क्षेपतः प्रोक्तं वर्षश्रवणजं फलम् ॥ २७॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
नवमे खण्डे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे
वर्षेण मौद्गलश्रवणमाहात्म्यवर्णनं नामैकोनत्रिंशोऽध्यायः ॥ ९.२९
(Page खं. ९ अ. ३० पान ७९)

## ९.३० मौद्गलनित्यश्रवणमाहात्म्यवर्णनं नाम त्रिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

सूत उवाच ।
राजाऽभूच्चाक्षुषे कश्चिन् सुमेधो नाम धारकः ।
नानाधर्मपरो यज्वा दाता मानी महाबलः ॥ १॥

सर्वशास्त्रार्थतत्त्वज्ञो द्विजदेवातिथिप्रियः ।
सप्तद्वीपाधिपो भूत्वा स चक्रे राज्यमुत्तमम् ॥ २॥

एवं राज्यपरो राजा सर्वेषां हितकारकः ।
वान्ध्यदोषसमायुक्तो बभूवातीव दुःखितः ॥ ३॥

नानोपायांश्चकाराऽसौ पुत्रप्राप्त्यर्थमादरात् ।
नालभत् पुत्रमानन्ददायकं दुःखितोऽभवत् ॥ ४॥

पत्न्या विचार्य राजाऽसौ त्यक्त्वा राज्यं तया सह ।
प्रधानेषु वनं घोरं ययौ शोकसमन्वितः ॥ ५॥

बभ्राम भ्रान्तचित्तोऽसौ सुमेधा यत्र तत्र च ।
ततो महावनं राजा ददर्श भयदायकम् ॥ ६॥

मरणे निश्चयं कृत्वा प्रविवेश महावनम् ।
तत्र व्याला मृगा व्याघ्राः पपलुस्तं निरीक्ष्य ते ॥ ७॥

ततो राजा प्रियायुक्तो बभ्राम भ्रान्तवद्यथा ।
तत्र क्रतुं ददर्शापि महायोगीन्द्रमुत्तमम् ॥ ८॥

कृताञ्जलिः स्त्रिया विप्रं प्रणनाम पुरः स्थितः ।
तुष्टाव तं विधेः पुत्रं तेजोयुक्तं प्रजापतिम् ॥ ९॥

सन्तुष्टस्तं महीपालं समाश्वास्य जगाद ह ।
दुःखं किं ते महीपाल किमर्थं वद चागतः ॥ १०॥

राजा तस्मै स्ववृत्तान्तं कथयामास विस्तरात् ।
तच्छ्रुत्वा ध्यानसंयुक्तो बभूव मुनिसत्तमः ॥ ११॥

जगाद नृपतिं विप्र क्रतुस्तं हर्षयन्निव ।
मौद्गलं शृणु राजंस्त्वं पुत्रयुक्तो भविष्यसि ॥ १२॥

मुदितो राजशार्दूलस्तं प्रणम्य तदाज्ञया ।
ययौ स्वनगरं चित्रं पुरोहितमुवाच ह ॥ १३॥

श्रुत्वा वृत्तं गुरुस्तस्य शाण्डिल्यः सर्वशास्त्रवित् ।
जगाद तं महीपालं हर्षनिर्भरमानसः ॥ १४॥

शाण्डिल्य उवाच ।
मौद्गलं चानयिष्यामि सर्वसिद्धिप्रदायकम् ।
श्रावयिष्यामि ते राजन् मा चिन्तां कुरु निश्चितम् ॥ १५॥

एवमुक्त्वा ययौ सोऽपि क्रतुं योगीन्द्रवन्दितम् ।
तं प्रणम्य यथान्यायं मौद्गलं श्रुतवान् परम् ॥ १६॥

लेखयित्वा स्वयं विप्रः शाण्डिल्यः सर्वतत्त्ववित् ।
ययौ सुमेधसं भूपं जगाद वचनं हितम् ॥ १७॥

शाण्डिल्य उवाच ।
मौद्गलेन समं राजन्न किञ्चिद्वर्तते परम् ।
शास्त्रं योगीन्द्रवन्द्यं तत् सर्वसिद्धिप्रदायकम् ॥ १८॥

क्रतोः प्रसादमाहात्म्यान् मया ज्ञातमिदं परम् ।
शृणु नित्यं महाराज मौद्गलं सर्वमुद्गलम् ॥ १९॥

एवमुक्त्वा स्वयं विप्रः समारभत हर्षितः ।
मौद्गलं तं प्रणम्याऽऽदौ जगाद नृपसत्तमः ॥ २०॥

सुमेधा उवाच ।
मुहूर्तं पश्य विप्रेश शुभदं तत्पुनः प्रभो ।

मौद्गलं कथयस्व त्वं सर्वसिद्धिकरं परम् ॥ २१॥

शाण्डिल्य उवाच ।
क्षणभङ्गुरदेहोऽयं न विश्वास्यो महीपते ।
विघ्नराजं स्मर त्वं वै तेन कालः शुभो भवेत् ॥ २२॥

गाणेशं नृपशार्दूल यत्किञ्चित् सर्वसिद्धिदम् ।
तत्र द्विविधभावेन स नरोत्तम आचरेत् ॥ २३॥

मुहूर्तं शुभमालोक्याथवा तं गणपं स्मरन् ।
समारभेन्न सन्देहो मान्यत्वं तु विचारय ॥ २४॥

एवमुक्तो नृपस्तेन तथेत्युक्त्वा स्त्रिया सह ।
शुश्राव मौद्गलं नित्यं शाण्डिल्याद्धर्मसंयुतः ॥ २५॥

ततः स्वल्पे गते काले गर्भयुक्तां निरीक्ष्य ताम् ।
पत्नीं महीपतिः सर्वैर्हर्षयुक्तो बभूव ह ॥ २६॥

पुत्रं सा सुषुवे साध्वी सर्वलक्षणसंयुतम् ।
राजा नित्यं सुहर्षेण शुश्रुवे मौद्गलं परम् ॥ २७॥

तदेकनिष्ठभावस्थो बभूवे नित्यमादरात् ।
अन्ते नगरसंयुक्तो जगाम गणपं परम् ॥ २८॥

तत्र दृष्ट्वा गणेशानं ब्रह्मीभूतो बभूव ह ।
जनैः सार्द्धं सुमेधास्तु पुराणश्रवणेन वै ॥ २९॥

शाण्डिल्योऽपि वनं गत्वा नित्यं विघ्नेशमाभजत् ।
गणेशाग्रे पुराणं स कथयामास मौद्गलम् ॥ ३०॥

नित्यं भावसमायुक्तो मौद्गले तत्परोऽभवत् ।
शान्तियोगयुतो भूत्वाऽसेवत्तं गणनायकम् ॥ ३१॥

सर्वत्र सर्वमान्यः स बभूव ब्राह्मणाग्रणीः ।
अन्ते गणेश्वरं प्राप योगिवन्द्यो महायशाः ॥ ३२॥

तस्याश्रमो गणेशस्य क्षेत्रमाभूच्च सिद्धिदम् ।
दर्शनाद्यैर्महाविप्र सर्वसौख्यकरं परम् ॥ ३३॥

एवं नित्यजपे सक्ता मौद्गलस्य महामुने ।
इह भुक्त्वा प्रभोगांस्ते ब्रह्मभूता बभूविरे ॥ ३४॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खण्डे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे मौद्गलनित्यश्रवणमाहात्म्यवर्णनं नाम त्रिंशोऽध्यायः ॥ ९.३०

## ९.३१ वक्रतुण्डचरितश्रवणमाहात्म्यवर्णनं नामैकत्रिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

सूत उवाच ।
नानातपःपरः कुत्सः साक्षाद् द्विजवरोऽभवत् ।
तपसा शुद्धभावः स ब्रह्मश्रद्धापरायणः ॥ १॥

शमी दमपरो भूत्वा जडोन्मत्तादिकं परम् ।
चचार स ततः शाक्तेऽभवत् ब्रह्मणि तन्मयः ॥ २॥

नामरूपात्मकानां तद्ब्रह्मासत्संज्ञकं मतम् ।
तज्ज्ञात्वा शान्तिहीनश्च बभूवे खेदसंयुतः ॥ ३॥

तत्रागतं स योगीन्द्रं याज्ञवल्क्यं प्रतापिनम् ।
ननाम तं महाभागं कुत्सो धर्मविदुत्तमः ॥ ४॥

सम्पूज्य हर्षसंयुक्तः प्रपच्छ विनयान्वितः ।
वद योगं महायोगिन् शान्तिदं योगिनां मतम् ॥ ५॥

याज्ञवल्क्य उवाच ।
पञ्चचित्तमयी बुद्धिः संयोगायोगरूपिणी ।
तस्यां भ्रान्तिप्रदा सिद्धिर्नानासिद्धिप्रदर्शिनी ॥ ६॥

तत्र बिम्बं गणेशस्य पतितं मोहधारकम् ।
बिम्बभावं परित्यज्य ब्रह्मीभूतो भविष्यसि ॥ ७॥

तदर्थं वक्रतुण्डस्याऽऽराधनं कुरु सर्वदा ।
तेन शान्तिसमायुक्तो भविष्यसि न संशयः ॥ ८॥

बिम्बं मायायुतं प्रोक्तं मोहितं सिद्धिबुद्धिगम् ।
(Page खं. ९ अ. ३२ पान ८१)
तद्भावं हन्ति तुण्डेन तेनायं वक्रतुण्डकः ॥ ९॥

मायासुखं नराकारं तस्माद्वक्रं परं मुखम् ।
तयोर्ब्रह्मसमायोगे वक्रतुण्डोऽयमुच्यते ॥ १०॥

कण्ठाधो मायया युक्तो मस्तकं तद्विवर्जितम् ।
वक्राख्यं तस्य विप्रेश तेनाऽयं वक्रतुण्डकः ॥ ११॥

अनेनार्थेन संयुक्तं वक्रतुण्डं भजस्व च ।
तेन शान्तिसमायुक्तो गाणपत्यो भविष्यसि ॥ १२॥

एवमुक्त्वा ययौ योगी याज्ञवल्क्यो महायशाः ।
कुत्सो हर्षसमायुक्तो वक्रतुण्डपरोऽभवत् ॥ १३॥

ततः स्वल्पेन कालेन शान्तिं लेभे महामुनिः ।
गाणपत्यस्वभावेनाभजत्तं वक्रतुण्डकम् ॥ १४॥

कुत्सो नित्यं महायोगी वक्रतुण्डचरित्रकम् ।
खण्डं पपाठ भक्त्या स मौद्गलस्य सुहर्षितः ॥ १५॥

तस्य गेहे कदाचित्तु अगमत् शूलसंयुतः ।
भगन्दरयुतः पापी द्विज आङ्गिरसोद्भवः ॥ १६॥

दुःखयुक्तो ननामाऽसौ कुत्सं योगविदां वरम् ।
स्नात्वा सुष्वाप विप्रेश तत्सान्निध्येऽतिदुःखितः ॥ १७॥

कुत्सो गणेशं सम्पूज्याऽपठत्तं वक्रतुण्डगम् ।
चरितं सोऽपि शुश्रावानायासेन गृहे स्थितः ॥ १८॥

सम्पूर्णे संश्रुते तत्र रोगहीनो बभूव ह ।
प्रणम्याङ्गिरसस्तं च ययौ स्थानं स्वकीयकम् ॥ १९॥

भुक्त्वा स विविधान् भोगान् जगामान्ते गणेश्वरम् ।
चित्रमाङ्गिरसोद्भूतं पश्य शौनक ते नमः ॥ २०॥

एवं नाना जनाः सिद्धिं ययुः श्रवणमात्रतः ।
वक्रतुण्डचरित्रस्य मौद्गलस्थस्य मानद ॥ २१॥

तत्रैवं कति ते ब्रूयां मया वक्तुं न शक्यते ।
अतः सङ्क्षेपतः प्रोक्तं माहात्म्यं श्रवणे भवम् ॥ २२॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
नवमे खण्डे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे

वक्रतुण्डचरितश्रवणमाहात्म्यवर्णनं नामैकत्रिंशोऽध्यायः ॥ ९.३१

## ९.३२ एकदन्तचरितमाहात्म्यवर्णनं नाम द्वात्रिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

सूत उवाच ।
पिप्पलादः पुरा कश्चिद्बभूव ब्राह्मणोत्तमः ।
स शैवमार्गसंयुक्तोऽभजत्तं शङ्करं सदा ॥ १॥

गौतमीतीरसंस्थः स क्रमतो योगसंस्थितः ।
बभूव सहजे संस्थः स्वाधीनत्वपरायणः ॥ २॥

ततो वेदार्थजं योगं ज्ञात्वा शान्तिधरं परम् ।
सहजं मोहहीनं तत् दृष्ट्वा दुःखयुतोऽभवत् ॥ ३॥

जगाम गौतमं विप्रो भक्तिसंयुत आनमत् ।
पप्रच्छ योगशान्त्यर्थमुपायं ब्रह्मदं परम् ॥ ४॥

जगाद गौतमो विप्रं स पृष्टश्चैकदन्तकम् ।
ब्रह्म तस्यैव भक्त्या त्वं शान्तियोगमवाप्स्यसि ॥ ५॥

यद्यन्मायाविकारैश्च संयुक्तं मुनिसत्तम ।
मायया सह तद्विद्धि एकशब्दप्रवाचकम् ॥ ६॥

मायाहीनं स्थितं यत्तन्मायिकं वा द्विजोत्तमम् ।
दन्तसंज्ञं विजानीहि पश्य वेदे विचक्षण ॥ ७॥

तयोर्योगे गणेशान एकदन्त इति श्रुतः ।
तं भजस्व विधानेन शान्तियुक्तो भविष्यसि ॥ ८॥

एवमुक्त्वा महायोगी गौतमो विरराम ह ।
पिप्पलादश्च सन्नम्य ययौ स्वस्याश्रमं परम् ॥ ९॥

तत्रस्थश्चैकदन्तं सोऽभजद्भक्तिसमन्वितः ।
गणेशकृपया विप्रो योगशान्तियुतोऽभवत् ॥ १०॥

ततो नित्यं महाविप्र एकदन्तचरित्रकम् ।
अपठमौद्गले संस्थं गाणपत्यस्वभावतः ॥ ११॥

कस्मिंश्चित् समये योगी पूजयित्वैकदन्तकम् ।

अपठच्चरितं तस्य तत्सान्निध्ये सुभक्तितः ॥ १२॥

तत्र पल्ली स्थिता काचित् सा शुश्राव चरित्रकम् ।
ज्वरयुक्ता महाभाग ज्वरहीना बभूव ह ॥ १३॥

देहान्त गणनाथं तु जगाम चरितश्रवात् ।
तं दृष्ट्वा ब्रह्मभूता सा बभूवे चित्रमद्भुतम् ॥ १४॥

एवमेकरदस्यैव चरितस्य च सेवने ।
श्रवणेन नरा नार्यो ब्रह्मीभूता बभूविरे ॥ १५॥

तेषां न शक्यते वक्तुं चरितं केनचिन् मुने ।
अतः सङ्क्षेपतः प्रोक्तं सर्वसिद्धिप्रदायकम् ॥ १६॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खण्डे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे एकदन्तचरितमाहात्म्यवर्णनं नाम द्वात्रिंशोऽध्यायः ॥ ९.३२

## ९.३३ महोदरचरितमाहात्म्यवर्णनं नाम त्रयस्त्रिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

सूत उवाच ।
माध्यन्दिनो महाभागो मुनिः सर्वार्थकोविदः ।
स्वधर्मनिरतो नित्यं नानाबलतपोन्वितः ॥ १॥

स शान्त्यर्थं जगामैव व्यासं सर्वज्ञमुत्तमम् ।
तं प्रणम्य महाभागं पप्रच्छ विनयान्वितः ॥ २॥

माध्यन्दिन उवाच ।
शान्त्यर्थं किं नरैः कार्यं तन्मे वद महामते ।
येन योगयुताः सर्वे ब्रह्मीभूता बभूविरे ॥ ३॥

व्यास उवाच ।
संयोगाऽयोगयोर्योगे ब्रह्मभूतो नरो भवेत् ।
तेन शान्तियुतो भावी सा शान्तिः सर्वसम्मता ॥ ४॥

स एव गणनाथस्तु महोदर इति स्मृतः ।
तं भजस्व विधानेन तदा शान्तिमवाप्स्यसि ॥ ५॥

संयोगाऽयोगरूपः सन् तयोरुदरगान् परान् ।
भुनक्ति सकलान् भोगान् स्मृतस्तेन महोदरः ॥ ६॥

ब्रह्मसु ब्रह्मसौख्यं यद्भोगरूपं प्रकीर्तितम् ।
भुक्तो भोगः स्थितो यत्र तदेव जठरं स्मृतम् ॥ ७॥

जगतां ब्रह्मणां विप्र जठरे संस्थितः सदा ।
(Page खं. ९ अ. ३४ पान ८३)
गणेशो भोगभोक्ता वै कोऽपि तस्योदरे न तु ॥ ८॥

प्रोक्तो महोदरस्तेन वेदेषु गणनायकः ।
एकस्तं भज भक्त्या वै तया शान्तिमवाप्स्यसि ॥ ९॥

एवमुक्त्वा महायोगी व्यासो योगीन्द्रसत्तमः ।
विरराम स तं नत्वा आश्रमं स्वं जगाम च ॥ १०॥

महोदरचरित्रं स मौद्गलस्थं विशेषतः ।
सेव्ययोगपरो भूत्वाऽभजत्तं तु महोदरम् ॥ ११॥

तस्मै तुष्टो गणाधीशो ददौ योगं सुशान्तिगम् ।
ततः शान्तियुतो नित्यमभजद्गणनायकम् ॥ १२॥

महोदरचरित्रं यदपठन्नित्यमादरात् ।
महायोगी स्वयं तत्र स्थापयामास विघ्नपम् ॥ १३॥

कदाचिद्गणराजं स पूजयित्वा पपाठ तत् ।
महोदरस्य माहात्म्यं तत्र चित्रं बभूव ह ॥ १४॥

मण्डूको दैवयोगेन शुश्रावाज्ञानसंयुतः ।
निर्माल्ये संस्थितस्तत्र भयभीतः समन्ततः ॥ १५॥

ततो बहौ गते काले मृतं तं कुत्रचित् स्थले ।
मण्डूकं च समानेतुमगमन् गाणपा मुदा ॥ १६॥

सङ्गृह्य ब्रह्मभूतं ते चक्रुरेकश्रवात् परम् ।
पाठस्य पश्य विप्रेश माहात्म्यं परमाद्भुतम् ॥ १७॥

एवं नाना जना विप्र महोदरचरित्रकम् ।
संसेव्य भुक्तभोगास्तेऽभवन् ब्रह्ममयाऽमृताः ॥ १८॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे

नवमे खण्डे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे
महोदरचरितमाहात्म्यवर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥ ९.३३

## ९.३४ गजाननचरितश्रवणपठनमाहात्म्यवर्णनं नाम चतुस्त्रिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

सूत उवाच ।
आश्वलायनवंशस्थो ब्राह्मणः सुरुचिः पुरा ।
नाम्ना स्वधर्मनिष्ठः स ब्रह्मज्ञानपरोऽभवत् ॥ १॥

नानायोगक्रमे सक्तः शमी दमपरायणः ।
चचार योगचर्यां तामन्ते सहजगोऽभवत् ॥ २॥

तत्र स्वाधीनतां दृष्ट्वा विस्मितः प्रययौ स्वयम् ।
स्वगुरुं तं प्रणम्याऽऽदौ योगं पप्रच्छ उत्तमम् ॥ ३॥

सुरुचिरुवाच ।
वद योगं महायोगिन् शान्तिदं सर्वभावतः ।
अस्माकं त्वं परा काष्ठा गुरुर्वंशधरः प्रभुः ॥ ४॥

आश्वलायन उवाच ।
पैलेन कथितो योगो मह्यं शान्तिप्रदः परः ।
तं तेऽहं कथयिष्यामि ब्रह्मीभूतप्रदायकम् ॥ ५॥

चित्तं पञ्चविधं त्यक्त्वाऽहं ब्रह्मेति प्रबोधतः ।
सरसं तेन शान्तिस्थो भविष्यसि न संशयः ॥ ६॥

सरसं चित्तकं यस्मात् सम्भूतं यन्मयं मतम् ।
अन्ते यत्र गतं तत्त्वं गजं जानीहि मानद ॥ ७॥

तदेवाननकं यस्य तं भजस्व विधानतः ।
गजाननं सुशान्तिस्थो भविष्यस्यधुना मुने ॥ ८॥

एवमुक्त्वा महाविप्र आश्वलायन आदरात् ।
तूष्णीं स्थितः स तं नत्वा ययौ स्वस्याश्रमं पुनः ॥ ९॥

गजाननपरो भूत्वाऽभजत्तं नित्यमादरात् ।
गजाननचरित्रं सोऽपठन् मौद्गलसंस्थितम् ॥ १०॥

तेन तुष्टो गणाधीशो ददौ योगं प्रशान्तिदम् ।
भक्ताय वै सुरुचये भक्तवाञ्छाप्रपूरकः ॥ ११॥

ततस्तेन रहस्यं यच्चतुर्वेदसमुद्भवम् ।
ज्ञातं गजाननाख्ये तत् संस्थितं ब्रह्मणोदितम् ॥ १२॥

गच्छन्ति यत्र सर्वाणि विश्वानि ब्रह्मकाणि तु ।
योगरूपेण यस्तेषु स गच्छतिग उच्यते ॥ १३॥

सर्वगं ब्रह्म सत्प्रोक्तमृग्वेदे सारगं परम् ।
तदेव गश्च विज्ञेयो मुने नाम्नि गजानने ॥ १४॥

जायन्ते विविधान्येव विश्वानि ब्रह्मकाणि च ।
तस्माददः स जः ख्यातोऽद्वितीयात्मक एककः ॥ १५॥

आदिमध्यान्तभावेषु यादृशं तादृशं भवेत् ।
यजुषि ब्रह्म सम्प्रोक्तं स्मृतोऽजः स गजानने ॥ १६॥

पञ्चचित्तमयं सर्वं नाशवन्नात्र संशयः ।
नष्टं नकारगं विद्धाऽऽसमन्तादा च तत्र वै ॥ १७॥

नष्टभावेषु यस्तिष्ठेदासमन्तात्तदेव तत् ।
ब्रह्म साम्ना समाख्यातं स्थित आनो गजानने ॥ १८॥

पञ्चचित्तमयं सर्वं नष्टं ज्ञातव्यमञ्जसा ।
तदेव योगभावेन ब्रह्मरूपं प्रकीर्तितम् ॥ १९॥

अथर्वणसमाख्यातमहमात्मा न संशयः ।
अज्ञानेन विनाशाख्यो न स्मृतः स गजानने ॥ २०॥

एतद् ब्रह्ममुखेभ्यश्च चतुर्भ्यः सारमीरितम् ।
गजाननो महाविप्र चतुर्वेदात्मकः स्मृतः ॥ २१॥

एवं गजाननं ज्ञात्वाऽभजत्तं सुरुचिः सदा ।
अपठत्तस्य माहात्म्यं तत्र चित्रं बभूव ह ॥ २२॥

कपोतो वृक्षसंस्थः कः तत् शुश्राव चरित्रकम् ।
स रोगसंयुतः पापी रोगहीनो बभूव ह ॥ २३॥

अन्ते गजाननं गत्वा ब्रह्मीभूतोऽभवन् मुदा ।
अज्ञानश्रवणेनैवाऽतः फलं किं वदामि ते ॥ २४॥

एवं नाना जना खण्डं यद्गजानननामकम् ।
श्रुत्वा पठित्वा भुक्त्वान्ते भोगान् ब्रह्म प्रलेभिरे ॥ २५॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
नवमे खण्डे योगचरिते योगामृतार्थशास्त्रे दक्षमुगलसंवादे
गजाननचरितश्रवणपठनमाहात्म्यवर्णनं नाम चतुस्त्रिंशोऽध्यायः ॥ ९.३४
(Page खं. ९ अ. ३६ पान ८५)

## ९.३५ लम्बोदरचरितवर्णनं नाम पञ्चत्रिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

सूत उवाच ।
भार्गवः कपिलो नाम सर्वशास्त्रविशारदः ।
कपिलस्य वरेणैव समुत्पन्नः सुधर्मवित् ॥ १॥

नानातपःसमायुक्तो योगनिष्ठो बभूव ह ।
तदर्थं शुनकं सोऽपि जगाम विनयान्वितः ॥ २॥

तं प्रणम्य माहात्मानं स्थित आर्जवसंयुतः ।
कदाचित्ते महाभागं पप्रच्छ पितरं मुदा ॥ ३॥

कपिल उवाच ।
योगशान्तिप्रदं नाथ वद ब्रह्मणि तन्मयम् ।
त्वं नो गुरुः समाख्यातस्तारयस्व भवार्णवात् ॥ ४॥

शुनक उवाच ।
विश्वानि विद्धि तं योगं ब्रह्माणि निःसृतानि च ।
यदाधारेण वर्तन्ते ते गच्छन्ति यदात्मनि ॥ ५॥

तदेव योगदं ब्रह्म लम्बोदरप्रवाचकम् ।
तस्योदरे स्थितं ब्रह्म विश्वं च भज तं सदा ॥ ६॥

तेन शान्तिसमायुक्तो ब्रह्मीभूतो भविष्यसि ।
नान्यथा त्वं महाभाग सिद्धिबुद्धिविमोहितः ॥ ७॥

एवमुक्त्वा महायोगी शुनको विरराम ह ।

तं प्रणम्य ययौ सोऽपि स्वाश्रमं हर्षसंयुतः ॥ ८॥

लम्बोदरचरित्रं स मौद्गलस्थं जजाप ह ।
गणेशं पूजयामास नित्यं भक्तिपरायणः ॥ ९॥

तेन तुष्टो गणाधीशो ददौ योगं सुशान्तिदम् ।
कपिलाय स्वभक्ताय भक्तवात्सल्यकारणात् ॥ १०॥

शान्तियुक्तः स्वयं योगी तज्जजाप चरित्रकम् ।
नित्यं पूजापरो भूत्वा लम्बोदरसमीपगः ॥ ११॥

तत्र चित्रं कदाचिद्वै बभूव शृणु शौनक ।
बलीवर्दः स्थितः कश्चिद्रोगाक्रान्तः पपात ह ॥ १२॥

शुश्राव तच्चरित्रं स सम्पूर्णं ज्ञानहीनतः ।
सद्यो वै रोगनिर्मुक्तो बभूवे हर्षसंयुतः ॥ १३॥

नाजानंस्तन् महत् पुण्यं बलीवर्दः कदाचन ।
कालेन स मृतस्तत्र ब्रह्मीभूतो बभूव ह ॥ १४॥

एवमज्ञानतो वाऽपि ज्ञानतो विविधा जनाः ।
ब्रह्मीभूता बभूवुश्च मया वक्तुं न शक्यते ॥ १५॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
नवमे खण्डे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे
लम्बोदरचरितवर्णनं नाम पञ्चत्रिंशोऽध्यायः ॥ ९.३५

## ९.३६ विकटखण्डमाहात्म्यवर्णनं नाम षट्त्रिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

सूत उवाच ।
अश्वत्थामा महाभागो द्रोणपुत्रः प्रतापवान् ।
कृपेण मातुलेनैव जगाम वनमुत्तमम् ॥ १॥

भारते संस्थितं सारं ज्ञात्वा कृष्णमुखाच्च्युतम् ।
बुद्धेः परतरं ब्रह्माऽभवत्तत्रैव लालसः ॥ २॥

बुद्धेः पत्युर्गणेशस्य हृदि ज्ञानं कथं भवेत् ।
परिपूर्णं तदर्थं स गौतमं शरणं ययौ ॥ ३॥

कृपस्तं विनयेनैव प्रणम्याश्रमसंस्थितः ।
सेवार्थं भागिनेयेन संयुक्तः परमार्थवित् ॥ ४॥

कदाचिद्योगिनां मध्ये गौतमः संस्थितोऽभवत् ।
कथयामास योगं स शान्तिदं योगसेवया ॥ ५॥

तत्र हर्षेण संयुक्तोऽश्वत्थामा विनयान्वितः ।
पप्रच्छ कृपसंयुक्तः संशयस्यापनुत्तये ॥ ६॥

अश्वत्थामोवाच ।
योगप्राप्त्यर्थमानन्दात् कस्योपासनमाचरेत् ।
योगरूपस्य योगीश वद सर्वज्ञ ते नमः ॥ ७॥

गौतम उवाच ।
गणेशोपासनं मुख्यं पूर्णं शान्तिप्रदायकम् ।
योगाकारः स वै वेदे नरे गजमयत्वतः ॥ ८॥

पञ्चचित्तात्ममोहेन तेन सर्वं विमोहितम् ।
न जानाति परं भावं योगदं गणनायकम् ॥ ९॥

समोहं चित्तमुत्सृज्य स्वयं चिन्तामणिर्भवेत् ।
तस्माद्विकटभक्त्या स लभ्यते विकटः प्रभुः ॥ १०॥

पञ्चचित्तमयं यद्यत्तस्माद्विकटभावतः ।
भ्रमं त्यक्त्वा स्वचित्तस्थं तं भजस्व गजाननम् ॥ ११॥

तच्छ्रुत्वा विस्मिताः सर्वे मुनयस्तं प्रणम्य च ।
स्वस्वाश्रमं समागम्य विकटे भजने रताः ॥ १२॥

अश्वत्थामा कृपश्चैव तं प्रणम्य महामतिम् ।
स्वस्वाश्रमं समागत्य विकटे भजने रतौ ॥ १३॥

मौद्गलस्थं चरित्रं तौ विकटस्य महात्मनः ।
प्रपेठतुर्महाभक्त्या पूज्य नित्यं गणेश्वरम् ॥ १४॥

ततः स्वल्पेन कालेन सन्तुष्टो विकटोऽभवत् ।
ददौ योगं स ताभ्यां वै पूर्णशान्तिप्रदायकम् ॥ १५॥

तथापि तौ महाभागौ पाठं चक्रतुरादरात् ।
खण्डस्य विकटस्यैव विकटं पूज्य नित्यदा ॥ १६॥

एकदा पाठसंयुक्तावभूतां च द्विजोत्तमौ ।
तत्र श्वा च कृपस्याग्रे शुश्रुवे संस्थितो महान् ॥ १७॥

अश्वत्थाम्नश्च मार्जारः समीपस्थित आशृणोत् ।
तौ रोगाद्यैर्विहीनौ च जातावज्ञानतः श्रवात् ॥ १८॥

अन्ते स्वानन्दगौ जातावेकश्रवणपुण्यतः ।
अतः कं महिमानं ते कथयामि ह्यपारकम् ॥ १९॥

अश्वत्थामा कृपश्चैव स्वस्वांशे सङ्गतौ मुदा ।
अन्ते योगयुतौ विप्र विकटे भजने रतौ ॥ २०॥

शौनक उवाच ।
योगयुक्तौ कथं सूत स्वांशगौ तौ बभूवतुः ।
गणेशेन तदाकारौ महच्चित्रं वदस्व माम् ॥ २१॥

सूत उवाच ।
देवाः कलांशभावेन भूभारहरणाय वै ।
भवन्ति मानवाद्यास्ते नानासामर्थ्यसंयुताः ॥ २२॥

इह पापं यदा कृत्वा गच्छन्ति यमपं मृताः ।
पतन्ति नरकेष्वेव यथा दशरथादयः ॥ २३॥

अथवा पुण्यमुग्रं ते कृत्वांऽते स्वर्गगा मुदा ।
भवन्ति भोगसंयुक्ता यथा रामो यमस्थले ॥ २४॥

भवन्ति योगयुक्तास्ते यदा स्वस्वांशगास्तदा ।
तदाकारा गणेशानं कल्पान्ते सङ्गता मुदा ॥ २५॥

यथा विदूरकः सद्यः कौरवे यमदेहगः ।
यमाकारो गणेशानमभजद्भक्तिसंयुतः ॥ २६॥

अन्ते योगसमायुक्तो यमः परमपावनः ।
ययौ गणेश्वरं विप्र ब्रह्मभूतः स्वभावतः ॥ २७॥

एतत्ते कथितं पूर्णं चरित्रं श्रवणात्मकम् ।
विकटस्यैव खण्डस्य सर्वसिद्धिप्रदायकम् ॥ २८॥

एवं नानाजनाद्याश्च श्रुत्वा खण्डं महाद्भुतम् ।
विकटस्य सुखं भुक्त्वा ब्रह्मीभूता बभूविरे ॥ २९॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खण्डे योगचरिते दक्षमुद्गलसंवादे योगामृतार्थशास्त्रे विकटखण्डमाहात्म्यवर्णनं नाम षड्त्रिंशोऽध्यायः ॥ ९.३६
(Page खं. ९ अ. ३७ पान ८७)

## ९.३७ विघ्नराजखण्डश्रवणपठनमाहात्म्यवर्णनं नाम सप्तत्रिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

सूत उवाच ।
विभीषणो महाभागो लङ्कां प्राप्य सुहृद्भृतः ।
रामं पूज्यं स्वयं नित्यं भक्तियुक्तोऽभजत् परम् ॥ १॥

तत्रादौ गणनाथस्य पूजनं वेदसम्मतम् ।
विचार्य विस्मितः सोऽपि दुःखयुक्तो बभूव ह ॥ २॥

धारयामास मनसि गणेशं ब्रह्मनायकम् ।
सर्वपूज्यं गणेशस्योच्छिष्टभुजोऽमरान् परान् ॥ ३॥

कदाचित्तत्र योगीशो नारदः स्वेच्छयाऽऽगतः ।
तं प्रणम्य प्रपूज्यैव परं पप्रच्छ हृत्स्थितम् ॥ ४॥

विभीषण उवाच ।
गणेशोच्छिष्टभोक्तारो देवा विष्णुमुखा मुने ।
अग्रपूज्यप्रभावत्वात् किमिदं वेदसम्मतम् ॥ ५॥

नारद उवाच ।
ब्रह्माकाराः शिवाद्याश्च नानायोगप्रधारकाः ।
ब्रह्माण्यन्नमुखान्येव वेदेषु कथितं बुधैः ॥ ६॥

तेषां स्वामी गणेशानो ब्रह्मणस्पतिसंज्ञितः ।
ब्रह्मणां पातृभावाद्वै पालयितृप्रभावतः ॥ ७॥

तेषां योगप्रदानार्थं देहधारी बभूव ह ।
गजाननादिचिह्नैः स संयुक्तो ब्रह्मरूपकैः ॥ ८॥

विघ्ना सत्तात्मकाः प्रोक्तास्तेषां स्वामी गजाननः ।
विघ्नैः सर्वान् प्रमर्द्यैव खेलते योगरूपधृक् ॥ ९॥

ब्रह्माणि विघ्नयुक्तानि भवन्ते राक्षसाधिप ।
सत्यसङ्कल्पहीनानि तदा तमभजन् परम् ॥ १०॥

पराधीनस्वभावं च जानन्ते तानि नित्यदा ।
स्वकीयं च ततः प्रीतो गणेशो जायते परः ॥ ११॥

ददाति योगमुख्यं स्वं गणेशस्तेभ्य आदरात् ।
तदा विघ्नविहीनानि भवन्ते वीर्यवन्ति तु ॥ १२॥

अतो गणेश्वरः पूर्णः सर्वेषां पूर्णतां गतः ।
पूर्णसर्वादितां वेदे ज्येष्ठराजप्रभावतः ॥ १३॥

एवं विघ्नेश्वरं नित्यं भज त्वं शान्तिदायकम् ।
रामः स एव विघ्नेशः कलांशेन न संशयः ॥ १४॥

गणेशभजने कस्य व्यभिचारो भवेन्न वै ।
समूहानां पतित्वात्तु समूहा विष्णुमुख्यकाः ॥ १५॥

एवमुक्त्वा महायोगी नारदो गणपं स्मरन् ।
ययौ सोऽपि महाबुद्धिर्विचार्य गणपे रतः ॥ १६॥

पपाठ विघ्नराजस्य स खण्डं मौद्गलस्थितम् ।
नित्यं भक्तिप्रयुक्तः सम्पूज्य तं गणनायकम् ॥ १७॥

ततः शान्तिसमायुक्तो बभूवेह विभीषणः ।
गणेशमभजन्नित्यं परं रामैक्यमार्गतः ॥ १८॥

एकदा राक्षसाधीशो ह्यगमत् सेतुबन्धनम् ।
महोदरं प्रपूज्यैव तत्रस्थः पाठमाकरोत् ॥ १९॥

तत्र भेकी जले संस्था शुश्रुवे खण्डमुत्तमम् ।
विघ्नराजस्य तेनैव सुखयुक्ता बभूव ह ॥ २०॥

एतस्मिन्नन्तरे तत्र सा सर्पेण धृताऽभवत् ।
ग्रस्ता ममार गाणेशैर्नीता स्वानन्दके पुरे ॥ २१॥

भेकीं गृह्य ब्रह्मभूतां चक्रुर्हर्षसमन्विताः ।
एवमज्ञानतः पुण्यं विघ्नेशचरितोद्भवम् ॥ २२॥

नाना जनादयो विप्र श्रुत्वा खण्डं ययुर्मुदा ।
स्वानन्दं भुक्तभोगाश्च मया वक्तुं न शक्यते ॥ २३॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खण्डे योगचरिते योगामृतार्थशास्त्रे दक्षमुदलसंवादे विघ्नराजखण्डश्रवणपठनमाहात्म्यवर्णनं नाम सप्तत्रिंशोऽध्यायः ॥ ९.३७

(Page खं. ९ अ. ३८ पान ८८)

## ९.३८ धूम्रवर्णचरितमाहात्म्यवर्णनं नाम अष्टत्रिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

सूत उवाच ।
वरतन्तुर्मुनिश्रेष्ठो नानाविधतपः परः ।
शान्तिं न तपसा लेभे ततः खेदयुतोऽभवत् ॥ १॥

नश्वरं विश्वमेवं स ज्ञात्वा ब्रह्मपरोऽभवत् ।
तत्राऽऽजगाम पौलस्त्यो विश्रवा मुनिसत्तमः ॥ २॥

तं दृष्ट्वोत्थाय विप्रेशं प्रणनाम पुपूज ह ।
पप्रच्छाऽऽभोज्य हर्षेण युक्तः परमपावनम् ॥ ३॥

वरतन्तुरुवाच ।
त्वं साक्षाद्योगिनां वन्द्यः पावनो हि समागतः ।
महापुण्येन ते पादपद्मं दृष्टं मया प्रभो ॥ ४॥

योगशान्तिप्रदं ब्रूहि येन शान्तो भवाम्यहम् ।
नश्वरं सर्वमुत्सृज्य तदर्थं लालसोऽधुना ॥ ५॥

विश्रवा उवाच ।
ब्रह्मज्ञानं विना तात न शान्तिं लभते नरः ।
ब्रह्म नानाविधं वेदेषु प्रोक्तं वेदवादिभिः ॥ ६॥

तेषां पतिं गणाधीशं ब्रह्मणस्पतिसंज्ञितम् ।
तं भजस्व विधानेन तदा शान्तो भविष्यसि ॥ ७॥

विश्वं वपुः शिरो ब्रह्म गजं योगे तयोर्मतः ।
सिद्धिबुद्धिपतिः साक्षात् परः स्वानन्दवासकृत् ॥ ८॥

वर्णा धूम्रायिता यत्र मनसा मुनिसत्तम ।

तेन धूम्राक्षरः प्रोक्तो ब्रह्मभूयप्रदायकः ॥ ९॥

धूम्रवर्णं गणाधीशं भज यत्नेन मानद ।
तस्यैव भजनं कृत्वा शान्तिं प्राप्तोऽहमुत्तमाम् ॥ १०॥

नान्यथा पूर्णशान्तिं तु लभते कोऽपि निश्चितम् ।
वेदादिभिर्मुनीन्द्रैश्च वेदाद्यैः पश्य तं विभुम् ॥ ११॥

पुलस्त्येनोपदिष्टोऽहं नानायोगपरायणः ।
त्यक्त्वा ब्रह्माणि तन्निष्ठः सदाऽभूवं न संशयः ॥ १२॥

एवमुक्त्वा महायोगी विश्रवाः स्वस्थलं ययौ ।
वरतन्तुर्विचार्यैवं गणेशभजने रतः ॥ १३॥

खण्डं मौद्गलसंस्थं स धूम्रवर्णात्मकं परम् ।
जजाप नित्यमानन्दात् पूज्य विघ्नेश्वरं परम् ॥ १४॥

पूर्णशान्तियुतो जातो योगीन्द्रः सर्वपारगः ।
गणेशकृपया नित्यमभजद्गणनायकम् ॥ १५॥

एकदा तीर्थसंस्थः स धूम्रवर्णं पुपूज ह ।
तस्याग्रे नित्यकं पाठं स चक्रे धौम्रवर्णकम् ॥ १६॥

तत्र काकः स्थितः सोऽपि वृक्षशाखापरायणः ।
शूलयुक्तः स शुश्राव धूम्रवर्णचरित्रकम् ॥ १७॥

सद्यश्च शूलहीनः स बभूवे हर्षसंयुतः ।
उड्डीय प्रययौ तस्माद् वृक्षात् स्वेच्छापरायणः ॥ १८॥

अन्ते गणेश्वरं गत्वा ब्रह्मभूतो बभूव ह ।
अज्ञानश्रवणात् पुण्यं पश्य किं कथयाम्यहम् ॥ १९॥

एवं नाना जनाः श्रुत्वा धूम्रवर्णचरित्रकम् ।
ब्रह्मीभूता बभूवुस्ते भुक्त्वा भोगान् विशेषतः ॥ २०॥

तेषु किं ते महाविप्र कथ्यते तन्न शक्यते ।
अतः सङ्क्षेपतः प्रोक्तं श्रवणस्य चरित्रकम् ॥ २१॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खण्डे योगचरिते योगामृतार्थशास्त्रे मुद्गलदक्षसंवादे धूम्रवर्णचरितमाहात्म्यवर्णनं नाम अष्टत्रिंशोऽध्यायः ॥ ९.३८

(Page खं. ९ अ. ३९ पान ८९)

## ९.३९ नवमखण्डमाहात्म्यवर्णनं नामैकोनचत्वारिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

सूत उवाच ।
प्रह्लादो नाम विख्यातो योगी योगपरायणः ।
मयूरेशं समाश्रित्याऽभजत्तं भक्तिसंयुतः ॥ १॥

स्वप्ने ददर्श देवेशं मयूरोपरि संस्थितम् ।
सिद्धिबुद्धिसमायुक्तं गजास्यं भक्तवत्सलम् ॥ २॥

तं प्रणम्य ननर्ताऽसौ साश्रुनेत्रो महायशाः ।
तं जगाद मयूरेशो वरयस्व वरान् परान् ॥ ३॥

स तं प्रणम्य विघ्नेशमगदद्धर्षसंयुतः ।
योगशान्तिप्रदां देहि भक्तिं तेऽतितरां प्रभो ॥ ४॥

तस्य तद्वचनं श्रुत्वा तं जगाद गजाननः ।
मौद्गले नवमं खण्डं पश्य योगप्रदायकम् ॥ ५॥

तेन योगीन्द्रवन्द्यस्त्वं भविष्यसि महामते ।
भक्तिर्मे भविता ते तु दृढा सम्पूर्णभावतः ॥ ६॥

एवमुक्त्वांऽतर्दधेऽसौ मयूरेशो महामतिम् ।
सञ्जागृतोऽभवत् सोऽपि स्मृत्वा स्वप्नं सुविस्मितः ॥ ७॥

ततो मौद्गलसंस्थं स खण्डं योगात्मकं परम् ।
पपाठाऽलिख्य भक्त्या स नवमं नित्यमादरात् ॥ ८॥

योगगीतार्थकं योगमलभत्तत्प्रसादतः ।
ततोऽतिहर्षसंयुक्तोऽभजत्तं नवधा प्रभुम् ॥ ९॥

क्षेत्रसंन्याससंयुक्तो नित्यं भक्तिसमन्वितः ।
पपाठ पाठकृत् पूर्णं नवमं मौद्गले स्थितम् ॥ १०॥

कदा दैत्येन्द्रमुख्यश्च बहुधा सिन्धुसंज्ञितः ।
क्षेत्रमूर्तिं गणेशस्य खण्डयामास संस्थिताम् ॥ ११॥

सिन्धोश्च प्रतिमां तत्र स्थापितां दैत्यपैः पुरा ।

प्रह्लादो दुःखसंसक्तोऽभवद् दृष्ट्वा च शौनक ॥ १२॥

क्षेत्रवासिजनाः सर्वे त्यक्त्वा क्षेत्रं मयूरकम् ।
प्रपेलुर्भयसंयुक्ता यत्र तत्र सुदुःखिनः ॥ १३॥

प्रह्लादो योगिवन्द्यः स क्षेत्रसंन्यासभक्तितः ।
उपोषणपरो भूत्वाऽतिष्ठत्तत्रैव नित्यदा ॥ १४॥

मानसीमकरोत्तत्र पूजां विघ्नेश्वरस्य सः ।
तस्योच्छिष्टं बुभोजैव मनसा भक्तिसंयुतः ॥ १५॥

दृढाऽऽग्रहं तस्य दृष्ट्वा मयूरेशोऽमृतं सदा ।
भक्ततालुस्थं तु कृत्वा तोषयामास तेन तम् ॥ १६॥

एवं बहौ गते काले शिवपुत्रो बभूव ह ।
मयूरेशोऽवधार्याय सिन्धोर्देवर्षिभिस्तुतः ॥ १७॥

स समागत्य सिन्धोश्च खण्डयामास मूर्तिकाम् ।
तत्रस्थां स्वयमेवं तु निवासमकरोत् प्रभुः ॥ १८॥

दृष्ट्वा तं पूजयामास प्रह्लादो योगिनां वरः ।
पारणं स चकारैव हर्षनिर्भरमानसः ॥ १९॥

प्रत्यक्षं गणराजस्तं प्रसन्नो वरदोऽभवत् ।
स वव्रे सन्निधानस्थो भजामि त्वां तथा कुरु ॥ २०॥

ब्रह्मैव ब्रह्मकल्पान्ते मयूरेशश्चकार तम् ।
अन्यं सन्निधिवासस्थं गणं ब्रह्मप्रियाख्यकम् ॥ २१॥

अन्यच्च शृणु विप्रेश विश्वामित्रो महामुनिः ।
चकार मौद्गलस्यैव भक्त्या पारायणं परम् ॥ २२॥

सरठस्तत्र वृक्षस्थः शुश्रावाज्ञानभावतः ।
ज्वरयुक्तः कदाचिद्वै नवमं खण्डमुत्तमम् ॥ २३॥

सद्यो हि ज्वरहीनः स बभूवे पुण्यगौरवात् ।
यथेष्टं विषयान् भुक्त्वांऽते स्वानन्दगतोऽभवत् ॥ २४॥

गणेश्वरं तत्र दृष्ट्वा ब्रह्मीभूतो बभूव ह ।
एवं नाना जना ब्रह्म लेभिरे खण्डसंश्रवात् ॥ २५॥

कति तेषु ब्रवीम्येव केन वक्तुं न शक्यते ।
भुक्तिमुक्तिप्रदश्चायं खण्डो नवमसंज्ञितः ॥ २६॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खण्डे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे नवमखण्डमाहात्म्यवर्णनं नामैकोनचत्वारिंशोऽध्यायः ॥ ९.३९

## ९.४० नवमखण्डमाहात्म्यवर्णनं नाम चत्वारिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

सूत उवाच ।
अयं ते कथितः पूर्णः खण्डो योगात्मकः परः ।
नवमः सर्वदः साक्षात् पूर्णयोगप्रदायकः ॥ १॥

एकस्य श्रवणेनैव खण्डस्यास्य महामते ।
सम्पूर्णं मुद्गलस्थं यत् फलं प्राप्नोति मानवः ॥ २॥

न शक्यते मया विप्र माहात्म्यं खण्डसम्भवम् ।
यत्र योगपतिः पूर्णो वर्णितो गणनायकः ॥ ३॥

चतुर्वेदभवं पुण्यं श्रवणेन भविष्यति ।
साङ्गैः साधनकैश्चास्य खण्डस्यात्र न संशयः ॥ ४॥

अष्टादश पुराणान्युपपुराणानि यस्तथा ।
शृणुयात् स नरस्तस्मादनन्तं त्वस्य संश्रवात् ॥ ५॥

शब्दब्रह्ममयान्नाना शास्त्राणि निःसृतानि तु ।
तेषां श्रवणतो जन्तुरस्यानन्तं फलं लभेत् ॥ ६॥

तीर्थानि सकलान्येव यः कुर्याद्विधिसंयुतः ।
तेभ्योऽनन्तगुणं पुण्यमस्य श्रवणतो लभेत् ॥ ७॥

क्षेत्राणि विविधान्येव यः कुर्याद्भक्तिसंयुतः ।
तेभ्योऽस्य श्रवणेनैव लभेतासङ्ख्यकं फलम् ॥ ८॥

दानानि विविधान्येव यः कुर्यान् मानवोत्तमः ।
अस्य श्रवणमात्रेणानन्तं तेभ्यः फलं लभेत् ॥ ९॥

यज्ञान् कुर्याच्च सम्पूर्णान् यथा शास्त्रप्रमाणतः ।

तेभ्योऽनन्तं फलं प्रोक्तमस्य श्रवणमात्रतः ॥ १०॥

इष्टापूर्तादिकान्येव नाना सत्कर्मकानि यः ।
प्रकुर्यात् स फलं तेभ्यो नरोऽनन्तं लभेच्छ्रवात् ॥ ११॥

बहुनाऽत्र किमुक्तेन नानेन सदृशं भवेत् ।
साधनं योगखण्डेन योगो यत्र निरूपितः ॥ १२॥

सम्पूर्णो योगखण्डस्ते कथितो व्यासवर्णितः ।
अतः परं गमिष्यामि स्वाश्रमं त्वाज्ञया च ते ॥ १३॥

सम्पूर्णं मौद्गलं तुभ्यं कथितं सर्वसिद्धिदम् ।
अतः परं पुराणं च नास्ति शौनक ते नमः ॥ १४॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खण्डे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे नवमखण्डमाहात्म्यवर्णनं नाम चत्वारिंशोऽध्यायः ॥ ९.४०

(Page खं. ९ अ. ४१ पान ९१)

## ९.४१ पुराणसमाप्तिवर्णनं नामैकचत्वारिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

शौनक उवाच ।
पुराणेषु महाभाग संशयैर्विविधैः परैः ।
प्राप्तैस्तैः संयुतोऽहं च संस्थितः खेदसंयुतः ॥ १॥

अन्यस्यैव पुराणस्य संशयाः श्रवणेन मे ।
गमिष्यन्ति महाबुद्धे विचार्यैवं स्थितोऽभवम् ॥ २॥

आन्त्यं मौद्गलकं श्रुत्वा संशया मे गताः पुरा ।
निःसंशयः कृतः सूत त्वयाऽहं नात्र संशयः ॥ ३॥

एको मे संशयश्चैव हृदि तिष्ठति तं नुद ।
गच्छ पश्चान्निजं स्थानं धन्यं मां कुरु शान्तिद ॥ ४॥

गणेशस्य रहस्यं यज्ज्ञातं व्यासेन धीमता ।
सर्वातिगं मौद्गलस्थं महच्चित्रं परात्परम् ॥ ५॥

ततो व्यासेन शास्त्रं तत् कृतं भारतकं परम् ।

धर्माधर्मव्यवस्थानं ब्रह्मसायुज्यदायकम् ॥ ६॥

तत्राऽऽदौ गणनाथस्य पूजनं स्मरणं कृतम् ।
पश्चाद्गणेश्वरस्यैव वर्णनं न कृतं किल ॥ ७॥

सम्पूर्णे भारते जाते कृतकृत्यो महामुनिः ।
अभवन्नात्र सन्देहः किमिदं कौतुकं वद ॥ ८॥

शौनकस्य वचः श्रुत्वा सूतः सस्मार तं गुरुम् ।
तत्क्षणात्तत्र योगीशोऽभवत् व्यासः समागतः ॥ ९॥

तं दृष्ट्वा हर्षसंयुक्ताः सूतशौनकमुख्यकाः ।
उत्थायाऽऽपूज्य ते नेमुः स्थाप्य प्राञ्जलयोऽभवन् ॥ १०॥

ततः समीपे संस्थाप्य जगाद मुनिसत्तमः ।
व्यासः शौनकमुख्यांस्तु ज्ञात्वा सूतप्रयोजनम् ॥ ११॥

व्यास उवाच ।
मया शास्त्रं कृतं विप्र भारतं नात्र संशयः ।
तत्रायं बुद्धिगः साक्षाद्वर्णितो ब्रह्मसंज्ञितः ॥ १२॥

सिद्धिदो ब्रह्मरूपोऽयं मुख्यं तदेव सम्मतम् ।
विकुण्ठादय एवं वै नाशयुक्ताः प्रकीर्तिताः ॥ १३॥

सिद्धिबुद्धिवरेणैव मोहितोऽहं न संशयः ।
गणेशं सर्वभावेन वर्णितुं विस्मृतोऽभवम् ॥ १४॥

अन्यं ग्रन्थं ततः कर्तुमुद्यतो ह्यभवं मुने ।
तत्राऽऽकाशभवा वाणी मामुवाच शृणुष्व तत् ॥ १५॥

गणेशवर्णनं पूर्णं प्रशस्तं मा कुरुष्व वै ।
मोहनार्थं गणेशेन जनानां रचितं त्विदम् ॥ १६॥

मुद्गलं मुनिमुख्यं च त्यक्त्वा सर्वे मुनीन्द्रकाः ।
स्पष्टं गणपते रूपं वर्णितुं न क्षमाः कदा ॥ १७॥

श्रुत्वाऽहं तां नमस्कृत्य संस्थितो मौद्गले रतः ।
अतः संशयहीनस्त्वं मौद्गलं भज भक्तितः ॥ १८॥

पुराणेषु गणेशस्य स्वरूपं वर्णितं परम् ।
ब्रह्मणस्पतिबोधस्य दायकं नात्र संशयः ॥ १९॥

तथापि मोहिताः सर्वे विप्राद्या न गजाननम् ।
जानन्ति तादृशं तेषु सिद्धिबुद्धिवरेण ते ॥ २०॥

गणेशवरदानेन भक्त्यै मौद्गलकं परम् ।
दृष्ट्वा गणेश्वरं पूर्णं ज्ञास्यन्ते नान्यथा क्वचित् ॥ २१॥

अतो मौद्गलमेकं त्वं भज वै नित्यमादरात् ।
कलिदोषेण हीनः सन् सर्वं च लभसे परम् ॥ २२॥

एवमुक्त्वा महायोगी व्यासस्तत्र महामतिः ।
विरराम च तत्रैव धूम्रवर्णः समाययौ ॥ २३॥

तं दृष्ट्वोत्थाय नेमुस्ते गणेशं भक्तिसंयुताः ।
सम्पूज्य तुष्टुवुस्ते वै गाणेशैर्गणपप्रियैः ॥ २४॥

धूम्रवर्णः सञ्जगाद तुष्टस्तान् हास्यसंयुतः ।
स्वभक्तान् गणनाथस्तु वचनं सुखदायकम् ॥ २५॥

धूम्रवर्ण उवाच ।
कलेः पराक्रमः सर्वो मया सम्पूर्णभावतः ।
खण्डितो मुनिमुख्याश्चाऽधुना चरत निर्भयाः ॥ २६॥

एवमुक्त्वा गणाधीशस्तान् गृह्य धरणीतले ।
स्थापयामास धर्मेण युक्तांश्चक्रे स मानवान् ॥ २७॥

जगाद मुनिमुख्यांस्तान् मौद्गलं मे रहस्यदम् ।
जपध्वं नित्यमानन्दात्तेनाऽहं वशगो भवे ॥ २८॥

नानेन सदृशं किञ्चित् प्रियं चोपनिषत् परम् ।
यत्राऽहं पञ्चधा संस्थो योगाकारस्वरूपधृक् ॥ २९॥

पञ्चधा मे स्वरूपं तु मौद्गलेन प्रकाश्यते ।
श्रवणेन पुराणस्य पठनेन तदर्थतः ॥ ३०॥

मौद्गलं यत्र विप्रेशाः पठ्यते श्रूयते जनैः ।
तत्राहं संस्थितः सर्वैर्भक्तिग्रहणलोलुपः ॥ ३१॥

ब्राह्मे बुद्धिस्थितं रूपं वर्णितं मे तदंशतः ।
तत्राऽहं संस्थितश्चैव निर्गुणाकृतिलक्षणः ॥ ३२॥

ब्रह्माण्डे प्रणवाकारो नानाखेलसमन्वितः ।
विश्वाकारप्रभावेणांऽशेन तत्र स्थितो मुदा ॥ ३३॥

गाणेशे मूर्तिगोऽहं तु तयोर्ज्ञानप्रकाशकः ।
गजवक्त्रादिचिह्नैः संयुक्तस्तिष्ठामि सर्वदा ॥ ३४॥

अन्येषु च पुराणेषु शिवविष्ण्वादिरूपधृक् ।
संस्थितस्तत्कलांशेन नानाभेदविहारतः ॥ ३५॥

मौद्गले योगरूपोऽहं तिष्ठाम्युपनिषद्रतः ।
सर्वेषां मे स्वरूपाणां योगस्तत्र प्रकीर्तितः ॥ ३६॥

तेषां प्रकाशकं पूर्णं तथा योगप्रकाशकम् ।
मौद्गलं मे प्रियं तस्मात्तत् समं नैव विद्यते ॥ ३७॥

भक्त्या सम्प्रार्थितोऽहं तु सृष्ट्याऽऽदौ मुनिसत्तमाः ।
तदा मया वरो दत्तो भक्त्यै भक्तिविवर्धनः ॥ ३८॥

तदर्थं मौद्गलं पूर्णं रचितं च मया पुरा ।
मुद्गलस्य हृदि क्षिप्तं सर्वसौख्यप्रदायकम् ॥ ३९॥

मयाऽसौ प्रेरितो योगी परं दक्षाय मौद्गलम् ।
कथयामास सम्पूर्णं पुराणं मे मुदाकृती ॥ ४०॥

ततः शिवादिभिर्देवैर्मरीचादिमहर्षिभिः ।
शेषादिभिर्नरैः सर्वैः सेव्यते मे पुराणकम् ॥ ४१॥

न मौद्गलं विना विप्राः स्वरूपं मे यथार्थतः ।
ज्ञायते केनचित् क्वापि पूर्णं सर्वप्रकाशकम् ॥ ४२॥

अन्यत्र मे स्वरूपं तु वर्णितं पूर्णभावतः ।
तत्र मोहो भवेन्नूनं सिद्धिबुद्धिकृतः परः ॥ ४३॥

सृष्ट्याऽऽदौ सिद्धिबुद्धिभ्यां प्रार्थितोऽहं विशेषतः ।
जगतां मोहनार्थं च ब्रह्मणां खेलकारणात् ॥ ४४॥

तदा मया वरो दत्तो मौद्गलं त्यज्य मां कदा ।
ज्ञास्यन्ति न च विश्वानि तेषु ब्रह्माणि संस्थितम् ॥ ४५॥

अतो मां मौद्गले संस्थं भजध्वं त्वेकचेतसः ।
तेन मे भक्तिसंयुक्ताश्चरिष्यथ निरन्तरम् ॥ ४६॥

नानेन सदृशं किञ्चिन् मत्प्राप्तौ साधनं परम् ।
सर्वसिद्ध्यर्थमेवं तु ज्ञातव्यं द्विजसत्तमाः ॥ ४७॥

अस्य श्रवणमात्रेण कृतकृत्यो नरो भवेत् ।
न शक्यते फलं वक्तुमपारत्वान् मया कदा ॥ ४८॥

मौद्गलश्रवणेनैव सन्तुष्टोऽहं महर्षयः ।
दास्यामि सकलाभीष्टं वृणुध्वं निर्विशङ्कया ॥ ४९॥

शौनकाद्या ऊचुः ।
भक्तिं देहि त्वदीयां नौ योगं शान्तिप्रदायकम् ।
यद्यदिच्छामहे नाथ तत्तत् सिद्ध्यतु सर्वदा ॥ ५०॥

गाणपत्यांश्च नः सर्वान् कुरु त्वं सर्वदा परान् ।
इमान् वरान् गुणाध्यक्ष प्रार्थितान् देव देहि नः ॥ ५१॥

तथेति तानथोक्त्वाऽसौ गणेशो ब्रह्मनायकः ।
व्यासादींश्च जगादाऽसौ वृणुध्वं वाञ्छितान् वरान् ॥ ५२॥

तैस्तथैव गणाध्यक्षः प्रार्थितो गणपप्रियैः ।
तथेति तानथोक्त्वा च सूतमूचे च विघ्नपः ॥ ५३॥

वरान् ब्रूहि महाभाग त्वया संश्रावितं परम् ।
द्विजेभ्यस्तेन सन्तुष्टो दास्यामि स तथाऽब्रवीत् ॥ ५४॥

तथेति तमथोक्त्वाऽसौ धूम्रवर्णो गजाननः ।
अन्तर्धाय स्वमात्मानं स्वानन्दस्थो बभूव ह ॥ ५५॥

सर्वे सन्तुष्टचित्तास्ते स्वं स्वं स्थानं ययुस्ततः ।
मौद्गलं तत् समाश्रित्य गणेशमभजन् परम् ॥ ५६॥

इमां मुद्गलजां श्लोकैः संहितां वेदबृंहिताम् ।
त्रयोविंशतिसाहस्रैः सार्धैकशतसंयुतैः ॥ ५७॥

अष्टाविंशत्यधिकैश्च अध्यायैश्च चतुः शतैः ।
खण्डैश्च नवभिः पूर्णां सर्वसिद्धिमयीञ्चिताम् ॥ ५८॥

मुद्गलः कथयामास सर्वेषां हितकारणात् ।
शब्दब्रह्मरहस्याख्यां साक्षाद्ब्रह्मप्रदायिनीम् ॥ ५९॥

(Page खं. ९ अ. ४१ पान ९३)

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खण्डे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे पुराणसमाप्तिवर्णनं नामैकचत्वारिंशोऽध्यायः ॥ ९.४१
॥ श्रीगजाननार्पणमस्तु ॥

॥ श्रीवक्रतुण्डाद्यष्टमूर्तिधरः गणेशः प्रसन्नो वरदो भवतु ॥

॥ इति श्रीमुद्गलपुराणे नवमः खण्डः समाप्तः ॥

॥ इति श्रीमुद्गलपुराणं समाप्तम् ॥

Proofread by Yash Khasbage

*MudgalapurAna Khanda 9 Yogacharitam*

pdf was typeset on September 18, 2023